

# राष्ट्रिय संस्कृत संस्थानम्

नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ५७ ॥

अथ

श्रीजगन्नाथविरचितम्

# ।। सिद्धान्तरहस्यम् ।।




सम्पादकः

डॉ० रामनारायण मिश्रः

# ।। सिद्धान्तरहस्यम् ।।

## (जगन्नाथविरचितम्)

●

योजनानिदेशकः प्रधानसम्पादकश्च

डॉ० गयाचरण त्रिपाठी

●

सम्पादक :

डॉ० रामनारायण मिश्रः




गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्

चन्द्रशेखर-आज़ाद उद्यानम्

प्रयाग-२

**प्रकाशक -**

डॉ० गयाचरण त्रिपाठी, डी० लिट्०
प्राचार्य
गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ
चन्द्रशेखर आजाद पार्क
इलाहाबाद - 2



प्रकाशन वर्ष : १९८२ ईस्वी

**मूल्य -**

**अक्षरसंयोजना -**

राजेश शर्मा

**मुद्रक :**

**एकेडमी प्रेस**
दारागंज, इलाहाबाद
फोन : 500970

# राष्ट्रीय-संस्कृत-संस्थानम्

(केन्द्रीय-शिक्षामन्त्रालयस्याङ्गभूतम्)

देहली



## गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठ-ग्रन्थमाला

प्रधानसम्पादकः

**डॉ० गयाचरण त्रिपाठी**

पञ्चचत्वारिंशं प्रसूनम्



जगन्नाथविरचितम्

# ।। सिद्धान्तरहस्यम् ।।



संशोधकः

**डॉ० रामनारायण मिश्रः**

गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्

प्रयागः

**RASHTRIYA SANSKRIT SANSTHAN**
(Under the auspices of the Ministry of H.R.D.)
**New Delhi**



**Ganganatha Jha Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

*Chief Editor*
**Prof. G.C. Tripathi**
Principal



**Vol. No. 57**

# Sidhāntarahasyam

*Critically edited by*
**Dr. Ram Narayan Mishra**
(A work of Rāmānuja Vedānta)



**Ganganatha Jha Kendriya Sanskrit Vidyapeetha**
Chandrashekhar Azad Park
Allahabad-211 002

पूज्यगुरुचरणेभ्यो
वैकुण्ठवासिशुक्लवर्येभ्यः

# विषय-सूची

१. सिद्धान्तरहस्यस्य विवेचनम् (भूमिका) ... १-११

२. सिद्धान्तरहस्यस्य अनुस्मृतिः ... १२-२०

३. सिद्धान्तरहस्यस्य पूर्वार्द्धभागः ... २१-४१

४. सिद्धान्तरहस्यस्य पूर्वार्द्धकारिका पाठः ... ४२-४५

५. सिद्धान्तरहस्यस्य उत्तरार्द्धभागः ... ४६-७४

६. सिद्धान्तरहस्यस्य उत्तरार्द्धकारिका पाठः ... ७५-७८

## *Foreword*

We are extremely happy to publish a hitherto unknown work of considerable importance on Indian Philosophy. The present work called *Siddhāntā rahasya* – is composed by one Jagannātha about whom almost nothing is known, yet the work is of great importance for the history of Indian philosophy since it presents a splendid synthesis of *Jñāna* and *Bhakti* ways – a tradition which starts with the *Bhāgavata purāṇa* and hence can be termed as a compromise between the *Advaita* of Śankara and the *Viśiṣṭādvaita* of *Rāmānuja*.

Pt. Ramnarayan Mishra, Reader in this Vidyapeeth is an erudite scholar of various *Śāstras* and he has shunned no pain to make this work as perfect as possible. I congratulate him on the production of this work and hope that this publication shall be well received by the scholars.

***Prof. Gaya. C. Tripathi***
***Principal***

# सिद्धान्तरहस्यरहस्यविवेचनम्

## (शोधपत्रात्मक उपोद्घातः)

प्रशस्तेयं मातृका पण्डित प्रवरैः श्रीजगन्नाथ महाभागै र्विरचिता महत्त्वपूर्णा गंगानाध झा केन्द्रीय संस्कृत विद्यापीठीय संग्रहलाये प्रयागस्थे समुपलब्धा विराजते।। तस्याः प्रकाशन कार्यमनुसन्धान पूर्वकं महदुपयोगि विद्यत एव। अयञ्च मातृका ग्रन्थ रत्नो नैकविधदृष्ट्या प्रकाशनता-मर्हति। एवं विधस्य महत्त्वपूर्ण ग्रन्थस्य लेखको निर्माता पुण्यश्लो को महामनीषीति शब्देनावश्यं समाजयितुं शक्यते। यतोऽत्र ग्रन्थे प्रतिपाद्य विषयस्य विवेचयिष्यमाणस्य महत्त्वं यथावसरं समुत्कर्षश्च प्रवर्तयिष्यते अयंहि जगन्नाथ महानुभावो न पण्डित राज जगन्नाथो रस गंगाधरकारः किन्तु तदन्य एवं कश्चिद् विपश्चित् सत्त्वगुणग्राही विद्याविभूतिविशिष्टः अयं कुत्र जन्मना कं भू भागं समलङ्चकार इति विषये न किमपि लिखितं लब्धम्। एका अन्यापि मातृका सिद्धान्तरहस्य नामध्येया जम्मू नगरस्थ कठुवा नाम के स्थान विशेषे विपुल प्रयासेन कस्यचिद् विद्वद्वरस्य गेहेऽधिगता। या विद्यायीठीय मातृकया सहपाठ भेद विज्ञानाय संशोधनाय च शोधकार्य क्रमे दृष्टि पथमानीता तस्यामपि लेखक विषये न कश्चनापि संकेतः न वा जन्मभूमि-जन्म भाषादि विषयेऽपि कोऽपि वृत्तान्तोदृष्टिपथमागतः परन्तत्रत्य मातृकायाँ विद्यायीठीय मातृकापेक्षयाकिमपि शपथ पत्रं पृथक् संलग्नं प्रारम्भे समुपलब्धम्। यस्मिन् कठुवा ग्रामस्थ विद्वद् वरेण मातृका संग्रह कर्त्रापूर्वजेन स्वपक्षतो मन्ये विनिवेदनं विहितं यत् 'यतो मातृका लेखनं कृतं यस्यां मातृकाया-मेवायं संकेतो विहितो वर्तते यद् येन विदुषेयं कृति-राराचिता तेनैव पूर्णतो गोपनीयतापि प्रादर्शि यदस्याः मातृकायाः प्रतिलिपिर्न देया कस्मैचित् न- वा स्वयं वा प्रकाशोविधेय इति वरप्रसादः कस्यचिद् देव विशेषस्येति। यदि प्रकाशनादिविषयकः कश्चन् प्रसंगः प्राप्येत् तदाशुद्धदासने कृतस्नानः सश्रद्ध एव विद्वान् कोपि ग्रन्थस्याव लोकनं यस्मै कस्मैचित् प्रयोजनाय पात्रतामर्हति। तदनुसारे णैवानेके विद्वान्सः प्रयासं कृतवन्तः प्रभूतां दक्षिणां प्रदानायापि प्रकाशनार्थं नैकवरं प्रार्थितवन्तः तथापि पूर्वजैर्नाङ्गीकृता तथा विद्याश्रद्धामयीखल्वपिप्रार्थना। नवा ग्रन्थोऽयं प्रदतः न वा प्रतिलिपि र्वा प्रदत्ता कस्मैचित्।

परमयमपि स्वाभाविकः सहर्षं प्रसादसंकेतोयत् यश्चास्य ग्रन्थस्य सश्रद्धं सादरमभ्यासं विधाय प्रवृत्तो भविष्यति स भाग्यशाली विद्वान् यशस्वी धनधान्यसम्पन्नता मेष्यति, यश्च कंठस्थीकृत्य तत्रत्यकारिकां मन्त्रवत् जपविषयीकृत्य व्रतीव स्थास्यति स हि ब्रह्म साक्षात्कारेण स्वजीवनं धन्यंविधास्यति। सच सर्वपाप विनिर्मुक्तः सन् भावि जीवनं सुखमनुभविष्यति यस्य महिमानं प्रभावञ्चातिशयेन वर्णयिष्यति स हि ऐहि का मुष्मिक फलभाग् भविष्यतीति।

यश्यचास्या मातृकायाः दर्शनं विधास्यति पूजनञ्च करिष्यति स सर्व तीर्थ दर्शन दान यज्ञादि फलम खिलं प्राप्स्यति। यश्चास्मिन् मातृका ग्रन्थे न श्रद्दधते विपरीतं भावञ्च भजते सामान्येन वेदान्त शास्त्रेण तुलनां करोति स हतभाग्यः। यस्य पार्श्वेग्रन्थोऽयं भविष्यति तेनास्य गोपनीयता पवित्रता संरक्षणीया नवास्य ग्रन्थस्य सत्ता ज्ञापनीया। यदि कश्चन ग्रन्थ लब्धपरिचयः परम्परया दर्शनं कामयते परायणम्बावाञ्छति तर्हि स सम्यक् परीक्षणीयः प्रथमम्। ततः परमेव पात्रतामधिगम्य मातृकायाः दर्शनं कारयेत्। तस्मिन् ग्रन्थे कीदृशोऽभिनिवेशः? स पवित्र भावनया ग्रन्थ दर्शनं प्रकाशनं वा कामयते वा स्वार्थ बुद्धया प्रवृत्तो वर्तते सर्वमेतत्परीक्ष्यैव ग्रन्थप्रतिपाद्ये विषये तदनुरोधि प्रतिष्ठित देवे परम्परया श्रद्धावान् वर्तते न वेति निर्णयं विधायैव तत् पुरस्सरं संस्थापयेत्। स हि आस्तिको न वा स विवाहितो ऽ विवाहितो वा? विवाहितश्चेदपि शास्त्रनिष्ठो देवनिष्ठो न वा? स प्रच्छन्नत्या मातृकामेनां दृष्ट्वा कीदृशं व्यवहरिष्यति? लिखित शपथ पत्रानुसारं व्यवहारा चरणं विधास्यति न वा?

सर्वमेतद् विज्ञायैव शपथञ्चकारयित्वा तस्यकृते मातृका दर्शनं कारयेद् बुधः। सच शपथ पत्रं लिखितं दद्यात् चेत्तदा कृतस्नानः पवित्रासन्ः संग्रहीता स्वयं श्रद्धावान् विनम्रो भूत्वा दर्शकाय च तथाविध मुपकल्प्य यथोक्त नियम पालन पूर्वकमेव पठेत् पाठ भेदञ्चान्य मातृकायाः सुधाराय क्रियेत् न प्रतिलिपिं कामयेत्। सम्यगर्थञ्चावधारयेत् नात्र विरोधः। एतस्य तथाविधमाहात्मयङ्गीकृत्यैव सत्पात्रेनिक्षेपः तदर्थस्य च क्रियेत्। श्रद्धालवे तदुपदेशः क्रियेत्। नातिशयः सामान्य समाजे प्रकाशनीयः।

एतद्धिसर्वं परम्परया यथा कालं विज्ञायैव सिद्धान्त रहस्यमिति ग्रन्थ मातृकां द्रष्टुमुक्त नियमानुसारं जम्मू नगरं गत्वा श्रद्धेयस्य विदुषो गेहे बहुविध मातृका ग्रन्था दृष्टि पथमानीताः परंतस्य विदुषो नामाभिजन संकेतो हि तस्य पूर्वजानां सदुप देशेन दृढ प्रतिषेधेन न प्रत्यक्षी कर्तुं समाज्ञप्तोऽयञ्जन इति भूयोभूयः प्रतिबोधितः तेन तस्य संग्रहकर्तुः नामादिकं नात्र चर्चा विषयी क्रियते। एकस्मिन् काले यथा नियमं पालनं कृत्वा मातृका द्वयी दर्शन विषयीकृता। तदनुसार मेवेतः शब्देन्दुशेखर श्रैधरी टीका

मातृकायाश्छाया चित्रं सिद्धान्त रहस्य च छायाचित्रं नीत्वैव तत्र गतोऽभवम्। तत्रहिपाठभेदं विद्यापीठीय मातृकयासह यथास्थलं प्राप्य सर्वं विलिख्य संशोधनञ्च विधाय प्रतिनिवृत्तः। विद्यापीठीय सिद्धान्त रहस्यस्य छायाचित्रं विलोक्य महान्तं विपादमन्व भवत्सविद्वत् प्रवरः उक्तवाँश्चापि योहिमन्त्र मयस्य शब्द राशेः सद् व्रह्मणः प्रतिमामेनां शब्दमयीं सुरक्षितुन्नोपायं विधातुं प्राभवत् येन कीटाणुभिः मातृका सच्छिद्राः सविद्धाः कृताः तर्हि-द्वितीयां मातृकां गोपायितुं कथं समर्थः स्यादिति। कथंचिद्धि शपथ पूर्व कमेव प्रतिज्ञाप्य मामपि, ततः परमेव स्वीयं सिद्धान्त रहस्य मातृकां दर्शितवान् मत्पुरस्तात्। येन पाठभेदः सम्यग् विहित एव। तैरहं प्रतिबोधितो यद् भवान् साधुभावनया अस्या विपुल प्रतिष्ठार्चनधिया बद्धपरिकरः सश्रद्धः विद्यापीठीय मातृकोद्धाराय प्रकाशानाय लब्ध शोध कार्यश्चेत्तर्हि शपथपूर्वकं व्यवहार उचितः। मया हि तदनुसारेण स्वीकृत्य तदीयाज्ञां सिद्धान्त रहस्य मातृकायाः पाठभेदं विधाय विद्यापीठीय मातृकायाश्छाया चित्रं सम्यकतया संकेतं विधाय च यात्रा सफलीकृता जम्मू नगरस्य। प्रतिज्ञानुसारमेव केवलमत्र शोध कार्य विपयक एव पदार्थ परिचयः समुपस्थाप्यते। वस्तुतोऽस्य सिद्धान्त रहस्यस्य ग्रन्थ विशेषस्य वैशिष्टयं शनैश्शनैरवधार्यते। लघावस्मिन् ग्रन्थे वेदान्त विद्या सुप्रतिष्ठिता विद्यते न संशयः वेदान्त सूत्रीय प्रतिपादन प्रक्रियाचाप्यत्रविलक्षणैव। सारल्येन गुरुशिष्य संवाद महिम्ना महत्त्वाधायकोऽ यमध्यात्मविद्या मज्जूपेव सिद्धान्त रहस्य ग्रन्थो मन्यते। जम्मू नगरस्थ विदुषा सुस्पष्टमादिष्टोऽहं यत् सम्प्रति तु भवते कथमपि मातृका प्रादर्शिता परमितः परं न कस्मैचिदपि दर्शयिष्यते ज्ञापयिष्यतेवा तदीया सत्ता। विद्यापीठीय मातृका माध्यमेन पाठभेद विज्ञानाय स्वीयाया मातृकायाः साक्षात्कारे न कोपि विरोध इति विभाव्यैवप्रस्तूयते नान्यथेति तदाशयः शपथ पत्रे तत्रान्यस्याः मातृकायाः समवधाने कश्चन् प्रतिषेधो नास्तीति विचार्य सहयोगदानं महान्धर्मः ''इति पाल्यते।

अस्तु प्रकृतिमिमां जम्मू नगरीय विदुषां विनिवेद्य सम्प्रति प्रकृत ग्रन्थ प्रतिपाद्यविषये समासतः विचारणात् पूर्व मत्र ग्रन्थ कर्तुः कश्चन् वृत्तान्त विशेपः समुपस्थाप नीयोऽवश्यं प्रतिभाति पर मत्र विपये तदीयो न कोपि देश कालादि विपयकोऽभिनिवेशः समनुभूतः न वा कोप्यन्य आधारः समुपब्धो येनतच्चर्चा चर्चिता भवेत्। केवलं ग्रन्थान्तेऽत्र सुदामोपनाम्ना सदाशिव भट्ट सुनुभगवन्तेन् द्रव्य द्वारा सम्पादिता परार्थं चेति विलिखितं विद्यते। ग्रन्थकर्ता जगन्नाथोहि दिनकर दुर्गासुतत्वेन स्मृतोविद्यते। सौभाग्यादेव जम्मू नगरस्थ एव साम्बाक्षेत्रीय विदुषोऽनन्त रामशर्मणः सकाशेऽपि सिद्धान्त रहस्य मातृका सुरक्षितास्ति केनचिद् विज्ञाय तत्र गत्वाच तस्या मातृ कायालब्ध

छायाचित्रः प्रयागं प्रतिनिवृत्तः सिद्धान्त रहस्य मातृकया पाठभेदे सौविध्यं प्राप्य महती प्रसन्नता जाता समनुभूताच।

इदानीं सत्यमनुभवामियत् द्विमातृका साहाय्येन पाठभेदोऽनुसन्धानकार्ये महत्त्वमासादयिष्यति। अस्याँ तृतीयायाँ मातृकायाँ द्वितीय मातृकावन्न कश्चन शपथ पत्र प्रतिबन्धः प्रदात्राकृतः सहर्षं छाया चित्रं प्रदाय महान्तमुपकारं कृतवानिति तदर्थ माभारी तस्य। स महानुभावोपि भूयोभूयः प्रसंशनीयो योहि मातृकायाः पाठभेद विज्ञानाय स्वीयामहत्त्वशालिनी गोपनीयापि मातृका साक्षात्कार विषयीकृता अतस्तेषां विदुषां सादरमाभारं वहामि। तृतीय मातृ कायाँ क्वचिदप्यादावन्तेच न ग्रन्थ लेखक विषये कापि चर्चा कृता। तेन लेखक विषयेभवतु नाम नैतिहासिकं तथ्यं किमपि सुलभं तथापितस्य वैदुष्य विषये न कोपि सन्देहो विसम्वादो वा प्रकाशयितुं शक्यते यतः सिद्धान्त रहस्य मातृका ग्रन्थोऽयं सर्वथा वेदान्त सूत्रोपनिषद् गण सम्मतो गीतादि सच्छास्त्र सम्मतश्च प्रतीयते।

एकतस्त्वयं ग्रन्थः कारिका बद्धः सदव्याख्यान समवेतश्च। अपरतस्त्वस्मिन् मातृका ग्रन्थेऽद्वैत वाद सिद्धान्त निरूपण प्रक्रिययासह भक्तिभावोत्कर्षश्चापि विश्रान्तिं लभमानो महान्तं निःश्रेय साधि कारं रव्यापयत्येव। ग्रन्थोऽयं पूर्वार्धोत्तरार्ध महत्त्वपूर्ण भागद्वेयन विराजते। प्रत्येकं भागे कारिका पाठः सव्याख्यानः वैदुष्यपूर्णः समग्र सच्छास्त्र सोपानवदतिरमणीयतमासादयति।

पूर्वोत्तरार्धभागद्वघटितोऽयं ग्रन्थ विशेषो विशिष्टां प्रतिभांप्रस्तूय सत्यमेवात्म साक्षात्काराय श्रवण मनननिदिध्या सनादि पवित्रां शास्त्र ज्ञान गाथासारणिमभि रक्षते। पूर्वार्धे त्रयस्त्रिशतं कारिकाः सन्ति ता सां कारिकाणां व्याख्यानञ्चापि सरसं स प्रमाण युक्तितसमुपेतं विद्यते तराम्।

उत्तरार्धेचापि एकत्रिं शत् कारिका विद्यन्ते। तत्रापि तासां सद् व्याख्यानं यथाक्रमं सम्य गुपवृहंतिमेव येन भागद्वयेऽपि दार्शनिकी सदाऽनु सन्धे याऽऽध्यात्मिकी प्रक्रिया प्रतिभा सुप्रतिष्ठिता सञ्चाकास्ति शास्त्र सम्मतं नितरां शब्दार्थ प्रकाशन प्रतिबोधन प्रक्रिया शोभना दृष्टिपथायते येन मनो मोमोमुद्यमते सुतराम्। सम्यग्दृष्ट्वा पठित्वाशब्दार्थद्वयानु सन्धान ञ्चातीवानन्दसन्दोहावर्जकम् सम्प्रत्यधिगता सिद्धान्त रहस्य मातृका आकार प्रकारदृशा विद्यापीठीय मातृकावत् परिलक्ष्यते यस्याश्छाया चित्र मधिगतम् परमत्र पञ्चषानि प्रपत्राणि परिभ्रष्टानि यानीह न दृष्टि पथायन्ते। सम्प्राप्त मातृकायाँ पाठभेदसमालोचनेन प्रमुख मातृकया सह सुसामञ्जस्यं प्रायः प्रतीयते। वस्तुतः ख मातृकायामेव विचारतो यथास्थलं पाठभेद उपलब्धः। साच परिपूर्णा दृष्टि

प्रथमागतापि वैशिष्टयं धारयन्ती समासादिता यस्या छायाचित्रं नाधिगतं किन्तु प्रमुख मातृकया सहपाठ भेद ज्ञानाय जम्मू नगरस्थ महानुभावेन विदुषा आहूतोहं तत्रगतश्च तत्रैव पाठ भेदं संशोधनञ्च विधाय प्रतिनिवृत्तः इति पूर्वमपि ज्ञापित मेव। तस्या यः कोपि पाठ भेदोलब्धः स महत्त्वपूर्ण एव विद्यते।

(क) प्रथम मातृकायाँ नैकत्र संशय निराकरणाय प्रतिबोधितः

(ख) मातृका समुपायतां भजत्येवेतितस्याः

वैशिष्टयं प्राशस्त्यञ्च प्रकाशयति निःसन्देहम्।

इत्थमत्र सिद्धान्त रहस्य मातृकाग्रन्थोहि 'क' 'ख' 'ग' तिसृभिमार्तकाभिः शोध कार्ये प्रशस्यः। सारल्येनाल्प कालेन चरम पुरुषार्थ मोक्षाख्य प्रतिपादन परोऽयं ग्रन्थ रत्नो वेदान्त ग्रन्थेषु लघुकायः सन्नपि सभ्यग्गाम्भीर्यमा हत्येव। प्रायोऽद्वैत वादसिद्धान्तख्यापनाय सरसः सरलोरुचिकरश्च श्रेयः प्रेय उभय विधफल साधन साध्य पन्था अत्र सामान्यव्युत्पत्तिधरैश्चापि समुपास्य आदरणीयो भविष्यतीति महिमामण्डितस्य ग्रन्थस्य सदुपयोगितानुदिनं विद्वज्जननिकरमारञ्जयिष्यत्यपि निश्चयः। अत्र हि समासतः सिद्धान्त रहस्य मातृकाग्रन्थस्य प्रतिपाद्य विषयमधिकृत्यैव विनिवेद्यते किञ्चित् सादरम् तथाहिसर्वे विद्वान्सः शास्त्रपारावारदृश्वानः प्रतिपादयन्त्येव यदस्मिन् संसारे धर्मार्थ काममोक्षाख्येषु चतुर्विध पुरुषार्थेषु चरमः पुरुसार्थ एव जन्म साफल्याय विभिन्न शास्त्रेषु सुनिर्दिष्ट स्तदनुसार मेवात्र ग्रन्थ प्रतिपाद्य सन्दर्भित पक्षमनुरुद्धय् विषयविचार समुपस्थापनीय तामेवांगीकुर्वन्तु। तद्यथा निखिलमेव जगन् मिथ्याऽविद्याकल्पित मेवामनन्ति तत्त्व दर्शिनो विद्वान्सः।

'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इत्युक्तिमधिकृत्य दुःख शोकाकुले व्यवहारिके जगति गृहीतजन्मानो जनाः सामान्यबुद्धि परिच्छिन्न बुद्धिम्वा समधिगम्यात्यन्तिक दुःख निवृत्तये परमशान्ति लाभाय प्रयत माना भवन्त्येवेति सत्यम्। आत्मनः स्वरूप विषये तज्ज्ञान विषये च नाना सिद्धान्तै र्विभिन्नाः पन्थानोऽपि प्रतिबोधिताः इत्यपि सत्यमेव। आत्मनः परमानन्द रूपता चिन्मयतासत्यता चश्रुति समधि गम्यैवेति न विवादः।

आत्मा वा अरे द्रष्टव्यः इत्यादि श्रुतिः सर्वथा सदर्थ बोधनाय समेषां दर्शन शास्त्रकाराणां मूलभूमि बीजरूपमिति मन्त्रवदाराध्यते शास्त्रानुयायिभिः समाधि निष्ठैरपि। सोऽयमात्मा अहमित्य परोक्षानुभवसिद्धः शास्त्रसम्मतः सुविज्ञेय एव। सर्वेषां प्राणिनामन्तः कर्णं सत्यमेवाहं पदार्थ रूपेणात्मैव प्रति बोध्यते भासते चापि नान्यः

कश्चना परः पदार्थ इत्यस्ति विपश्चितमाशयः।

स एवात्मात्र सिद्धान्तरहस्ये जिज्ञास्यमानः सिद्धान्ततः स्वरूप निवर्चन पूर्वकं गीयते निसर्गतः श्रद्धाविश्वास पूर्वकं दर्शनाय साक्षात्काराय विमृश्यते।

येनात्मनासर्वेपदार्था अनुभूयन्ते स्वयञ्चसदसद्भ्यामनिवर्चनीय रूपतया सम्मानातो निगमेषु एवात्माऽनुभवस्वरूपं स्वयं मनुभाव्यः स्वयं प्राप्यः प्रापकः प्रकाश्यः प्रकाशकश्चेति विविध विचित्र श्रुतिगणैः प्रशंस्यमानः कीर्त्यमानो विजिज्ञास्य एवात्र। सर्वानपि स्थूल सूक्ष्म पदार्थ विषेषानात्मैव प्रकाशयति स्वयञ्च प्रकाशमान्‌ 'इत्यपि तथ्यं वक्तुं पार्य्यतेऽनुरोधतः सिद्धान्त रहस्यस्य। अत एवायं स्वतन्त्र इत्यस्ति सम्यगुक्तिः काचिदमोधा शास्त्रेषु शास्त्रोपज्ञतामयी श्रुति गोचरी भूता समेषां विदुषामपि। अन्ये सर्वे पदार्था विषय भूता जडात्मका परतन्त्राएव पर प्रकाश्या अपि। आत्मातु चेतनः सच्चिदानन्दस्वरूपो नित्यो विभूश्च। द्वयोरात्मानात्मनोः मध्ये मौलिकं वास्तविकं पार्थक्यं सत्य मेतदवधारणी यमस्ति। एतद्विपये किमपि शास्त्र वचनमिदं संस्तूयमानं विद्यते ''यद् दृश्यं सर्वमनात्मा स्यात् दृगेवात्मा विवेकिनः'' अर्थात् आत्मनो द्रष्ट्रृत्वं तदितरानात्मनो दृश्यत्वचं श्रुति प्रमाणगम्यं सिद्धमेव। तदनुरूप मेवात्मानन्दानुभावनुभूतिराचार्याणामुपयोगितां भजति सुतराम। अत्र शंक्यते यत् यद्यात्मा श्रुत्यनुकूलानुभवगम्यः सिद्धो वा तदात्माविपयिणी विप्रतिपत्तिरिह कथमावकाशं लभताम्? आत्मा वा अरे द्रष्टव्यो मन्तव्यः निदिध्यासित तव्यश्चेति वचनाद्यनुष्ठानं किन्निबन्धनमिति?

योहि पदार्थः पारमार्थिकतया परिनिष्ठितः तस्यकंथमत्र सन्देहास्पदत्वं? अत्रखलु वेदान्त सूत्र भाष्यानुसारेण प्रवक्तुं शक्यतेयत् सामान्य रूपतया अहं ब्रह्मास्मि, तत्त्वमसीत्यादि वचनैर्वा परोक्षतया सदानुभूयमानोऽपि आत्मा अहमर्थ रूपः श्रुति प्रतिपादित नित्यश शुद्ध बुद्ध मुक्त स्वभावतया स्वभावनया-वापि अप्रसिद्ध त्वात् संशयापन्नो भवत्येव। अस्माद्धेतोरेव सन्देह प्रयोजनाभ्यामात्म स्वरूप विपयिणी शंकापि जिज्ञास्यमाना समुदेति सहजः पक्षः। एवं विधैव जिज्ञासा शास्त्रनुरोधतोऽपनीयते विचार्यते च सम्यक् समाधानाय। विचारश्चात्र सदनुसन्धानम् येनात्म विषयक विचारो ह्यामात्मानु सन्धानमुच्यते। यस्यात्मनः स्वरूपानुसन्धानं पदार्थानुसन्धान विधानम्वा क्रियते शास्त्र सम्मत सत्तर्क प्रमाण युक्तिभिरिह। एवं विधास्यात्मनो विमर्शः भगवता आदि शंकाचार्येण वेदान्त सूत्र भाष्ये विवेक चूड़ा मणौ आत्मानात्मविवेके अपरोक्षानुभूतौ दशश्लोक्याँ तथा उपदेशपञ्च रत्ने च सम्यक् प्रवर्तितः अद्वैत वादीया या विलक्षण आत्मानुभूतिपद्धतिः परम्परा वा समुद् भाविता भगवतो मनोहारि प्रशस्यमाना

समभिनन्द्यते, सैवात्र सिद्धान्त रहस्ये विलक्षण व्युत्पत्ति मुखेन विशेपतः पण्डित प्रवरेणाचार्य जगन्नाथेनापि मातृका ग्रन्थे प्रत्यवोधि।

तत्रहि विशिष्टैर्विलक्षणै रहस्याख्यान विमर्शैर्वचोभिः पद्यात्मरूपैरूपस्थापयता लेखकेन तेन व्याख्यानञ्च कारिकाणां स्वयं विदधता आत्मानुभूतेः स्वरूप ज्ञानस्य पन्था शास्त्रदृशैव सरलीकृतः सरसीकृतः सामान्य व्युत्पत्ति शालिविपयेभ्योऽपि सत्पात्रेभ्योऽधिकारिभ्यः पाथेय इवातिशय प्रियः शास्त्र सिद्धान्त घटितो जन्म जरादि त्रासाद् विमुक्तये प्रदर्शितः सिद्धान्तरहस्य मिति सदन्वर्थ नाम्ना परिभावितः प्रभावतो युक्ति प्रमाणा दीनां नैसर्गिक शब्दार्थ कतयाऽऽत्मपदार्थ निर्णय इति।

स एष नेति नेति श्रुति वचनादि प्रमाणै रेवात्मा प्रकीर्तितः योहिसर्वविध द्वैताद्वैत वस्तुनो वैलक्षण्यञ्च भजते। नित्यशुद्धबुद्ध मुक्त स्वरूपञ्चाभिलक्ष्यते। तथा जिज्ञाधिकरण भाष्यान्ते परमाचार्येणाद्य शंकराचार्येण प्रतिवादि कल्पित विभिन्न विशिष्ट विप्रतिपत्ति निराकरण पूर्वक मौपनिपदस्थ सिद्धान्तानु भावितब्रह्मात्मनः सच्चिदानन्द रूपतया स्वरूपख्यापनं प्रतिष्ठापितमपि समभिनन्द्यते सम्यक्। तदनुसारमेव सिद्धान्त रहस्य पूर्वार्धे तुरीय कारिकया सम्यगभि धीयते यथा–शिष्य उवाच

**ज्ञातृभावे कथं ज्ञेयं ज्ञानाविषयत्वलक्षणात्।**

**वृत्यभावे कथं ब्रह्म वृंह कत्वोपपादनात्।**

अत्रहि यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुत्या वाङ्मनसोरगोचरत्वात् ज्ञानाविषयत्वेन ज्ञातु रत्यन्ता भावे सति स्वरूपे ज्ञेयतयैव न सम्भवतितर्हि ज्ञानमिति कथं पृष्ठ इत्याक्षेपः कृतः, अतः परब्रह्मणः परमात्मनो रूपेणैव प्रत्यगात्मनोऽनुसन्धानं कर्तव्यं नतु तद्भिन्नत्वेन इत्येव तत्रत्य तात्पर्यमवधाणीयं पर्यवसितं स्यादिति मन्ये।

अतः परम सुखज्ञान स्वरूपस्यात्मनो यथार्थाऽनुभवः कथङ्कारः कर्तव्य इति सद्दुद्देश्यतया लक्ष्यीकृत्य ग्रन्थ कर्त्रा आचार्येण प्रोक्त दिशा तदुद्भावनं विहितं सुप्रतिष्ठापितञ्चापि। तत्रात्म विषयक विप्रतिपत्ति निराकरणमात्म याथात्म्यानुभवश्चानु सन्धानस्य लक्ष्यमेव विधेयमूलभूतं मन्यते। यथाऽऽचार्येण भगवता शंकरेण सम्यगभिहित मपि। अत्रेत्थमपि विचिकत्स्यते। विजिज्ञास्यते वा यथा यदि तर्हितत्लोके ब्रह्म आत्मत्वेन प्रसिद्धमस्ति तर्हि ततो ज्ञात मित्यजिज्ञास्यत्वं पुनरापन्नं भवतीति न तद् विशेपं प्रति विप्रति पत्तिः यतोहि देहमात्रं चैतन्य विशिष्टात्मेन्द्रियकृता जना लोकायतिकाश्च प्रतिपन्नाः। आत्मावै पुत्र नामासि 'इति श्रुतेः इन्द्रियाण्येव चेतनात्मेत्यपरे समामनन्ति। मन इत्यन्ये विज्ञानमात्रं क्षणिक मित्येके शून्यमित्यपरे।

अस्ति देहाद्य तिरिक्तः संसारीकर्ता भोक्ता इत्यपरे नैयायिका मन्वते। भोक्तैव केवलं न कर्ता इत्येके। अत्र सांख्यमत निराकरणम्। अस्ति तद्व्यति रिक्तिः ईश्वरः सर्वज्ञः सर्व शक्तिरीति योगमत निराकरण मित्येवं विद्याः वहशः सिद्धान्ताः प्रथिताः।

वस्तुत आत्मस्वरूपमेवेश्वरः भोक्तुर्जीवस्य स्वरूपम् स्वीकुर्वन्ति केचन वेदान्तिनः इत्थमनेक विप्रति निराकरणेन सिद्धान्त प्रतिष्ठापनमाचार्यस्य परमार्थतो निःश्रयेस साधकतयाऽभिनन्द्यते। तदनुरोधेनैव ब्रह्म जिज्ञासोपन्यासेन वेदान्तवाक्य विमर्शः तद् विरोधि तर्कोपन्यासान्निः श्रेयस प्रयोजनाभ्युगमः संस्तूयते सिद्धान्त रहस्ये पूर्वार्धे शिष्य जिज्ञासोपशमनायोत्तरा र्धेन सम्यग् विशेपतः समाधानं कुर्वता पूर्वार्धेऽपि शिष्यि जिज्ञासा निराकरणा यांशत उत्तर वचनमात्म परमात्म विपयकं सत्तथ्यं प्रस्तुवता सिद्धान्त मुखेनानूद्य वदति ज्ञातृ भावादिकञ्चेति यच्चोक्तंत्वया तत् सत्यमेव हि अध्यस्थस्यापवादार्थ वैलक्षण्यन्निरुपितं सत्यम्। अपि चेत्थमपि प्रति बोधितन्तत्रैव

यदा विस्मृत्य दृश्यं वै स्वरूपेण व्यवस्थितिः तदैवार्तान्द्रियं हेयमुभयोरेप निश्चयः।

ज्ञातं ब्रह्मत्वया प्रश्ने यदुत्तरमनुत्तरं।

त्वयाप्रज्ञाभिमानेन वचसा प्रत्युदीरितम्।।

एवमात्मानुसन्धाता यथाक्रमं पूर्वपूर्व परिकल्पितः पदार्थानामात्म रूपतां परित्यज्य धीरतया सूक्ष्म विचार पूर्वकं तदन्ते निर्मल ज्ञान स्वरूपमात्मानम् कथाङ्कारमनुभवति? तमेव सतत्त्वपदार्थं स्फोटयितुं स एप नेति नेत्यात्यादि श्रुतिमधिकृत्यैव दशश्लोक्या माचार्येण विलक्षणैवात्मानुसन्धान सरणी रादृता प्रतिभातीति विचार्य तथा विधमनुपमं सिद्धान्त रहस्याख्यान परिपूर्णमानन्दघनीभूतम्वा तद् रूपम्वा समाम्नातञ्च नानाश्रुतिभिरनुभूतञ्च परमर्षिभिः पञ्चमहाभूत निष्ठ धर्म विलक्षणोऽयात्मा नित्यशुद्ध बुद्धमुक्त स्वभावोऽद्वितीयोहि परमानन्द बोधरूपो बोधाश्रयोवेति परमार्थतः सुनिर्णीतः। ततः परमपि ननु किं स्वरूपोऽयमात्मा? यतस्तस्य विमर्शनं कर्तव्यन्तत्राह नारायणेति नारायणेति ब्रह्मेति परमात्मेति संगच्छते

प्रकृत्या प्रत्ययोभिन्न केवलानन्द आश्रयः।

बुद्धया समेत्य विपयी विरागी तदनादरात् आदरा नादरौ त्यक्त्वा वोधरूपः स्वयं भवेत्।। इतीत्थं परं सिद्धान्तोहि श्रीजगन्नाथस्य ग्रन्थ प्रणेतुः वैदुष्यं महदुपलब्धि योग्यं सदुपयोगिभूतं सामयिकं प्रासङ्गिकञ्च मन्यते।

अतः सुस्पष्ट मेतदवश्यं ज्ञेयमस्ति यत् समेपामुत्पत्तिविनाशशीलानां दृश्यानां

पञ्चमहाभूतानां प्रकाशकः उत्पत्ति विनाशरहितोऽयात्मा निर्धर्मको निष्कल्मपः परमानन्दबोध स्वरूपः साक्षि भूत स्वलक्ष्यम्। निर्विशेप तथाविधात्मनि वर्णाश्रमादि व्यवस्थापि सत्यमविद्या मूलिकैव न तु परमार्थिकी। ध्यान धारणा योगादि निखिला युक्त युञ्जान (पक्वापरिपक्वावस्थारूढैः) योगिभिः सहजमनुष्ठितापि तत्कालिकी मानस व्यापार रूपामन्यते शास्त्र चरितार्थ्य व्यवहारोपपत्तये।

यदा खलु यथावसरमहं ममेत्याद्याध्यास कल्पनाऽपसीर्यते तदैव केवलस्याद्वितीयस्यात्मनो बोध उपपद्यते। सुपुप्तावपि कथमपि दृश्य पदार्थानां भानं न भवति प्रत्युत तत्रापि स्वान्तः करणप्रणाल्या स्वयमेव साक्षिभूतोऽयमात्मा प्रकाशते।

अतश्शिवः केवलोऽहमिति दशश्लोक्यां भगवता शंकरेणापि सम्यगेव सिद्धान्त रहस्यमेव श्रुत्यनुरोधतो विशिष्ट मुद्रया समवतारित मित्येव वाभिनिवे शोऽत्र ग्रन्थ कारस्य प्रभावितः प्रतिभाति। स चात्मा अखण्डैक रूपः श्रुति गणैस्सम्नात एव। अत एवात्र सिद्धारहस्येपि तत्त्वमस्यादि महावाक्यार्थ ज्ञानात् स्वरूप बोधप्राप्त इवेयते। यथाहि–

तत्त्वमस्यादि वाक्यार्थ ज्ञानात्प्राप्त इवेयते।
तथापि प्राप्यते नैव संकल्पोपशमं बिना।

ममप्रश्न निराकर्तुं त्वयाप्रज्ञाभिमानसः प्रत्युक्तः शास्त्रसिद्धान्त इत्येपा पूर्णतातव।

इत्येवं विधया गुरुशिष्य सम्वादाभिममान धारया आत्म परमात्मविपयक विमर्शमुद्रया सिद्धान्त रहस्यग्रन्थ सूर्योदयः सनातन धर्मावलम्बिनामाराध्यतामुपैति। सिद्धान्तरहस्य सूर्य प्रतिभानेन सारल्येनाल्पायासेन चाल्प बुद्धीनामुद्धदारः संसार सागरात् सुनिश्चितः। अस्य सिद्धान्त रहस्यस्य प्रतिपाद्य विषय निवर्चनेन सम्यगव वोधेन च कल्प कल्पित तमोमोहोपशमनं शक्यमेव। अयंहि सिद्धान्त रहस्य विषयः परमोपायो मुमुक्षूणा मितरेषामपि निमज्जतां भवजलनिधौ। एतद् विपये सम्यक् तया आत्मनिवर्चनोपान्ते भगवता शंकराचार्येणापि दशश्लोक्याँ सम्यगेव सुप्रतिष्ठापितं सर्व जनहिताय। यथा निर्विकल्प रूपता निष्कल्मपताऽद्वितीयता च प्रमापितापि स्वयमाचार्येण–यथा तत्रैव–

न शास्ता न शास्त्रं न शिष्यो न शिक्षा।
न च त्वं न चाहं न चायं प्रपञ्चः।।
स्वरूपावपोधो विकल्पासहिष्णुः।

तदेकोऽवशिष्टः शिवः केवलोहम्।।

वस्तुत आत्मा नाम स्थूल सूक्ष्म कारणत्रय विलक्षणः पञ्च कोशव्यतिरिक्तः अवस्थात्रय साक्षी सच्चिदानन्द रूप एव। श्रुति समवहित युक्ति प्रमाण पुरस्कृत तर्कानुसन्धानेनात्म ज्ञानं समुदेति स्वरूपलक्षण लक्ष्य मुपैति चेत्येव प्रमाणीकर्तुं सिद्धान्तरहस्य ग्रन्थ प्रवृत्तिरपि न विरुध्दा कथमप्यवधार्यते। पण्डित प्रवरस्य जगन्नाथस्य नैसर्गिकायं समुद्भावना सदात्म विवेक विपयिणीति सर्वसन्देह पराप्रतिभातीति न सन्देहः। अतो व्रह्मात्मैक्य बोधे सत्यमेव शिष्य जिज्ञासा वाहुल्य मूलक तदुपशम विधि विपयक समाधान पद्धतिरेव सिद्धान्त रहस्य ग्रन्थे भागद्वयेन पूर्वोत्तरार्ध रूपेण समुपवृंहिता सा विद्या या विमुक्तये 'इति सादरं श्रुतिसार सन्दर्शनपरा मुमुक्षुणां हितावहा सिद्धोपाय भूमि रम्यमुपगम्यत इति निर्णयः कृतः सिद्धान्तरहस्य मातृकाग्रन्थे। विस्तृत पक्ष विपक्षोभय विपंगता विमर्शितव्या विपयास्तु प्रश्नोत्तर गर्भित गुरुशिष्य सम्बाद विभव वैभवाः सिद्धान्त रहस्यमणयः एव सिद्धान्तरहस्यमुपागताः सुनिबद्धाः सन्तीति व्यपदेष्टुं शक्यंते। सिद्धान्त रहस्योत्तरार्धे शिष्यं प्रति गुरुवचनमवतरणात्मकं समग्र पक्ष विपक्ष प्रश्नोत्तराभ्यां जिज्ञास्यं समाध्येयतान्निर्धार्यमाण मतीवोप कारकतां भजति यथाऽत्र संकेतः

**श्रुणुध्वं पुत्रका यूयं नाना मत विमोहिताः**

**श्रेयोवदन्त्यनैकान्तं यथामति यथारुचि। इति वचनेन**

पूर्ण सन्दर्भं समग्र मत समुपस्थापनधिया कृत मेव तन्निराकण मुद्रयाऽभिलक्ष्येहापि काचन प्रक्रियान्तरा शास्त्र मूलैव श्रुति सन्दर्भ विशुद्धा परमाराध्या विनियुक्तेति समभिनन्द्यते।

अपि च = सत्त्वतुष्टिः परित्यज्य कैवल्य विरहातुराः

स्वात्मानं हरिमीक्षन्तो भजध्वंगत मत्सराः–इति वचनेन।

प्रायः सर्वे सिद्धान्त वादिनः प्रत्युक्ता एव ये भक्तिं प्रपत्तिञ्चाक्षिपन्त आत्मानं धन्यं मन्यंते। एतेनात्र निःसंशयमिदं वक्तुं शक्यतेयत् सदसद् रूपो योहि पदार्थस्तद् विलक्षणोऽनिर्वर्चनीयो वा मन्यतामीश्वर आत्म पदार्थत्वेनभिन्नत्वेनापि परमुक्त सिद्धान्त रहस्यवचनेन हि सेव्य सेवकभावो ज्ञाता ज्ञेयः प्रभाता प्रमेयो ध्याताध्येयोवा परस्पर मर्हत्येवोपकार्योपकारभाव निष्ठतया तत्पात्रताम्। उपर्युक्त कारिका वचनानुसारेण सिद्धान्त रहस्यकारो जगन्नाथो महान्तं सिद्धान्त मेवो पस्थाप्य सिद्धान्त

रहस्य मिति ग्रन्थ नामान्वर्थतां प्रकाशयत्। स्वस्यात्मनः सख्युरशेष देहिनां सामान्यतःकिं विपयोपपादनैः –

**त्वामात्मानं परं मत्वा परमात्मानमेव च।**

**आत्मा पुनर्बहिर्मृग्य अहो सजनता सता।**

**दुराराध्यं समाराध्यं विष्णु सर्वेश्वरेश्वरं।**

**यो वृणीते मनोग्राह्यमसत्वा कमुनीष्यसौ।।**

**अनर्थैरर्थ संकाशैर्नित्यानन्द महोदधेः।**

इत्यादि प्रहलाद शुक नारदारि वाक्यै हरेस् – स्वात्मत्व निरुपणात् इतरस्यदेहादेस्तुच्छत्वं निरूप्य पुनः सकल गीता भागवत सिद्धान्तं कृष्णार्भ हरिसनकादि वाक्यैर्दढ़यति, मत्कर्म कृन्मत्परमो मद्भक्तः संगवर्जितः।

**निर्वैरः सर्वभूतेषु यः पश्येद् भगवद्भावमात्मानः।**

**भूतानि भगवत्यात्मन्येष भागवतोत्तमः**

इति सत्प्रमाणानुरोधि सिद्धान्तरहस्य मातृका ग्रन्थोऽयं विलक्षणो वेदान्त सिद्धान्त निदर्शको निरूपकः यदधिकृत्याद्वैत द्वैत विशिष्टा द्वैतादि प्रक्रिया निसर्ग तश्चरितार्था जगत्प्रपञ्च मोहोपशमनाय सिद्धान्तदीपः सदसत्प्रकाशको मुग्धानां कृते सदाऽनुसन्धेय एवायं ग्रन्थ रत्नोहि पूर्णतोऽभ्यास पथमानीतस्स्याच्चेत्तदा जीवनमध्येतृणां धन्यं पारमार्थिकञ्च जायेत। सम्पूर्णोऽपि वेद वेदान्त-प्रतिपाद्य पक्षोऽत्रनवनीतवच्छास्त्र दधिनिः सृत इव सिद्धान्तरहस्ये ससुरभि प्रकाशयमानः समनु करणीयः समभ्यसनीयः ''इत्येव विनिवेद्य शोधपत्र-पुष्पाञ्जलिरूपो विद्वद् वरेभ्यः सादरं समपूर्यते येन दोष गुण निर्धारण पूर्वक मुपयुक्त निर्देशेनायञ्ज नोऽनुग्रहीष्यते तैः कृपयेति। यथाकालं यथाविधि शोधकार्य विधौ सम्यक् प्रवृत्तये साधुकार्य सम्पादनाय सत्प्रेरणा प्रदानायच प्राचार्यवर्याः सादरमभि नन्द्यते येनायं ग्रन्थः प्रकाशनार्ह तांगत स्वान् प्रति तथान्य सहयोगिनो विदुषः कर्म चारिणः प्रतिचाभारं प्रकाशयन्नेष विरमति।

**विदुषामेव कृपापरवशः**

**रामनारायण मिश्रः**

## ।। सम्पादनार्ह सिद्धान्त रहस्यम्।। वैशिष्ट्यम्

### ।। सिद्धान्त रहस्यानुस्मृतिः।।

वेदान्त विद्याविपिने प्रबुद्धः
सिद्धान्तकल्पद्रुमपुष्पपुञ्जे।
भृंगोपमः स्वादपरागबद्धः
स्वयं जगन्नाथवरस्तुतस्स्यात्।।१।।

शिष्यैरुपस्थापितनैकभावान्
जिज्ञास्यमानान् हरिभावितान् वा
सत्तर्क युक्त्या विधिनोपपाद्य
सिद्धान्तगाथां मुखरीचकार।।२।।

पद्यात्मनासूत्र पथप्रवृत्तान्
सौशील्यवात्सल्यमयप्रवोधान्
सल्लालितान् तत्त्ववरप्रसूतान्
भावाभिधान् ज्ञापयतीहसत्यम्।।३।।

कर्तास्य सिद्धान्तमतस्यकोपि
ग्रन्थस्य विद्यानिहितस्य विद्वान्
वेदान्तवीथिप्रहरीवधीरो
यायाज्जगत्याँ विवुधैरुपास्यः।।४।।

अद्वैत वेदान्तमतप्रसक्तो
भक्तिप्रपत्तिप्रणयप्रधानः
पक्षद्वयेनापि महाविभूतेः
सिद्धान्त संस्थापनभावितोऽभूत्।।५।।

समस्यमाने प्रभुतात्मनीत्थं
द्वैतेपितत्त्वेभवमोक्षमन्त्रे
प्रागल्भताभासित शुद्धसत्त्वे
श्रध्दारतस्सन् विजयी प्रशस्यः ।।६।।

सत्तीर्थवेद्ये महति प्रबन्धे
रहस्यसिद्धान्तनिरुपणार्थम्
प्रस्तूयमानानवमातृतका सा
श्रुत्यर्थभानाय परायणास्तु ।।७।।

सन्धार्यमाणस्य मनोरथस्य
विद्याव्रतब्रह्मविचारणाय
ब्रह्मैक्यभावानुगतस्यजन्तोः
गीतं रहस्यञ्च समीक्ष्येऽत्र ।।८।।

संसेवनाय प्रवरैर्वचोभिः
मुग्धामृतोद्गारमनोहरैश्च
जीवात्मरूपप्रथनायलोके
सिद्धान्तशास्त्रार्थ कृतिः कृतास्ति ।।६।।

वेदान्तसूत्रोहितमान्यतायाः
ग्रन्थेन सिद्धान्तरहस्यकेन
सध्दर्म सत्कर्म नयेन साकं
श्रद्धालु लोकस्य शुभोऽस्तुपन्थाः ।।१०।।

मायापिशाचीभय मुक्ति हेतोः
पापान्धमोहान्तकर प्रबोधः
ग्रन्थेन तेन प्रहितः समर्थः
सिद्धान्त पक्षश्श्रुतिसंगतोऽस्ति ।।११।।

मांगल्य भावेन सदा निविष्टो
रमा रमेशोऽपि रथीव्रतीव
रथे शरीरे स्वजनस्य मुक्त्यै
सम्पादयन्नर्थमिव प्रबन्धे।।१२।।

सत्यैव गाथाग्रथिता विभिन्नै-
र्युक्तिप्रमाणानुगतै र्विचित्रैः
तर्कैस्सहप्रीतिभरैरमोधैः
ब्रह्मद्रवाराधनरक्षिणी स्यात्।।१३।।

नवोदया दिव्यदिशानवद्या।
विद्याविभूपेव यतेर्जयाय
गीतेव गीताऽत्र निबन्धमाला
सम्पाद्यमानास्तु सुमातृकाभा।।१४।।

शिक्षास्वनेकागतयः प्रकीर्णाः
शुचिव्रतानामिव साधनानाम्
सदाऽऽत्म संस्कार पथे प्रवीणे
सिद्धान्त दीपेनदिशोविमृश्याः।।१५।।

सन्धार्य पन्थानमवेक्ष्यसम्यक्
ग्रन्थेऽत्रसिद्धान्तपरानुवाचः
प्रोक्ताः समृद्धाः वहुधोपपन्नाः
ध्यायन्तएवप्रणतप्रबुद्धैः।।१६।।

नैसर्गिकैः पक्षविपक्षशक्यै-
रज्ञानमोहोपशमे समर्थैः
वाक्यैरनल्यैः प्रथितै र्विमृष्टं
रहस्यमेतद्धि मनोगतं स्यात्।।१७।।

यद्यस्ति तथ्यं श्रुति सार्वभौमं

जीवात्मनां भुक्तिविमुक्तिकम्वा

तत्तर्हिबोध्यंसरलैः सुमन्त्रै-

र्धर्मैरुदारैरपि भावशुद्धैः ।।१८।।

सर्वात्मनामिन्द्रिय निग्रहाय

स्वान्तर्वहिर्वार्थधरीसपर्या

ब्रह्माण्डवर्तीवनिजं स्वरूपं

विज्ञायलोको भवतु प्रसन्नः ।।१९।।

जन्मापिधन्यं भुविकर्मधन्यं

निस्स्वार्थ सेवाजगतः प्रशस्ता।

माता च धन्या जनकश्चधन्यः

विद्यासुसंस्कारवतीवधन्या ।।२०।।

पारायणे यस्य जनोऽनुरक्तः

सत्योपदेशेन सुकर्मयुक्तः

जातोनुलोको भयमोहमुक्तः

को वा न सेवेत रहस्यमूलम्? ।।२१।।

धन्यो जगन्नाथ गुरुर्वरेण्यो

येनाल्पकालेनसुबोधकल्पः।

ग्रन्थोव्यधायि प्रभुवाद दर्शी

सत्यं स विज्ञैरपिवन्दनीयः ।।२२।।

सिद्धान्तलेशेन नवेन सद्यः

स्वस्य प्रबोधाय महाविभूते-

श्चाद्यापि सौभाग्यवरप्रदायी

सम्भासतां ग्रन्थवरोऽनुरूपः ।।२३।।

सन्त्येव नाना विधयश्च वैदिकाः
वेदांगवेदान्तपुराणगुह्याः
सर्वात्मनां ज्ञान विकाश धर्माः
सिद्धान्तिताः संकटकालवेद्याः।।२४।।

तथ्यानुबन्धेनरहस्यविद्याः
दिव्यातिदिव्यैरपिभव्यभावैः
यत्नेन संस्कारवलेम लब्धुं
शक्या भवेयुर्ब्रतरक्षकैश्च।।२५।।

प्राचूर्यभावान्विततर्कमूलो
व्यामोहमार्गेग्रसितान् विमुग्धान्
प्रज्ञापराधान्धजनान् प्रकाशे
नेतुञ्च सिद्धान्तरथोदयोस्ति।।२६।।

सांख्येनयोगेनसमाधिना वा
सत्तीर्थवासीव जपैः सुयज्ञैः
गीतार्थ सम्भापणरक्षणेन
धर्मीवसिद्धान्तपथोविशुद्धः।।२७।।

जाता यदस्य प्रथनेप्रवृत्ति-
र्ग्रन्थस्य सिद्धान्तरहस्यकस्य
प्रणेतृवर्यस्य यशस्कराय
विद्यावतां बुद्धि विवर्धनाय।।२८।।

नैराश्यभावान्तकरप्रयासै
र्वेदान्ततत्त्वाहितपुण्यराशिः
जन्माद्यवस्था कृतभोगबन्धं
विनाश्यसिद्धान्तपथः प्रशस्तः।।२९।।

सम्मोह संसारपथे प्रसक्तान्
त्रातुं जनान् ब्रह्मपथप्रयातान्
लीलायमानान् शरणागताँश्च
संस्कर्तुमेवप्रखर (प्रवर) प्रबन्धः।।३०।।

सिद्धान्तसद्ग्रन्थमयःसमीरः
सर्वार्तिसंहारकरश्च तीव्रः
संस्पर्शमात्रेण सतां मनांसि
प्रहर्षयन्नस्तु निबन्ध एषः।।३१।।

कल्याण कल्लोल तरङ्गमालः
श्रुत्यर्थमुक्ताऽमलभक्तिसूत्रं।
विद्यावतां कण्ठविभूषणञ्च
सिद्धार्थवाणीवरहस्यमन्त्रः।।३२।।

संकल्पकल्पायुतपुण्यधाम्नि
वैकुण्ठनाथेनसमीहितश्च
यज्ञेषु जाप्योऽनुभवो मुनीनां
भूयाच्चिरञ्चर्चितचन्द्रमेव।।३३।।

विद्या परा या विहिता श्रुतीज्या
देवर्षिवर्गैरुपसंस्तुतावा
सैवात्रसिद्धान्तरहस्यलीना
जेगीयमानाभुविभाग्यदास्यात्।।३४।।

सौजन्यतेवाश्रितरामपादा
दिव्यौषेधीवाखिलरोगनाशा
सुदेवतेवाननमन्त्र मुग्धा
सिद्धान्तविद्येहमनीषितास्यात्।।३५।।

शोधप्रबन्धेन रहस्यधाराः
शान्त्यैसुधासंद्रवितप्रवाहाः
सन्तप्त लोकस्य समादरेण
सिद्धान्तसामुद्रमयाभवेयुः ।।३६।।

नारायणोलोकहितायसद्यो
लीलाविभूतौप्रणतार्तिहारी
स्वामीगुरुर्वाजगदीशनाम्ना
संस्तूयमानोविदितः प्रबन्धे ।।३७।।

हरिस्स्वयं लोकगुरुर्गरीयान्
मातापिता भ्रातृसखामहीयान्
संरक्षकः संकटकालमोहे
भक्तैस्तुतोभावितसर्वरूपः ।।३८।।

प्राधान्यश्रुत्यर्थ मते विमुग्धान्
विज्ञानपि प्राणभृतः प्रसाद्य
शास्त्रार्थसद्युक्तिवरैः प्रभूतैः
सिद्धान्तविद्यात्रविभूपितास्यात् ।।३६।।

मीमांस्यमानान् नवनीत कल्पान्
सत्यं जगन्नाथ गुरुर्महात्मा
सूक्ष्माति सूक्ष्मप्रथितान् पदार्थान्
समीक्षते ब्रह्मयुपः प्रबन्धान् ।।४०।।

नैराश्यनिद्रा पिहिताज्जर्नांश्च
ब्रह्मात्मविद्याविमुखान् विमूर्खा
नुध्दर्तुकामोद्रवितात्मविद्यः
सिद्धान्तदृष्टिमुररीचकार ।।४१।।

ग्रन्थस्यकल्याणकरस्यसद्यो
हृद्योऽनुभावः फलतीहलोके
कीर्तिः परामर्श विमर्शनाख्या
पुनाति लोकं रमणीव विष्णोः।।४२।।

धर्मेण रक्षाव्रतिनीवधन्या, वामासकामा नवनीरदामा।
सारस्वतीया भवसिन्धुधामा त्रातुंत्वदीया शुभवाणिलीला।।४३।।

यस्यप्रभावातिशयेन सीमा
ब्रह्माण्डजातस्य परावरस्य
याथार्थ्यबोधेन निवेदितात्र
सोऽयंसुसिद्धान्तवरः प्रकाश्यः।।४४।।

संकीर्त्यनीयाप्रतिभाबुधानां
मुग्धाङ्गनेवाखिललोकगीता
सद्दर्शनोत्थानविनीतदृष्ट्या
ग्रन्थप्रणेतुः प्रमिताचकास्ति।।४५।।

पुण्यावनिर्जन्मजितावदान्या
सिद्धान्तविद्याव्रतिनीसुमाता
सुमातृका वाचिरकालवन्द्या
प्राकाश्यवेदीं नु गता भवित्री।।४६।।

तस्याः समाराधन रास गोष्ठ्याः
गोप्यःकराधानहरेरिवात्र
विद्याः समस्ताइवभासमानाः
सिद्धान्त राधापतिसंगताःस्युः।।४७।।

कालेनवध्यानपथेनगामी
वेदार्थवीथिं परितः स्वमानी
विज्ञोजनः सर्वमतप्रभावी
भूयाज्जगन्नाथमतानुसारी।।४८।।

स्वल्पेनशिक्षाव्रतधारणेन
समग्रसन्तापविमोचनाय
हरेःप्रसादाधिगमायसद्यः
सिद्धान्तमन्त्रः प्रवर प्रबन्धः।।४६।।

धर्मार्थकामाख्यपदार्थकोपि
सिद्धान्तबोधेन विकीर्यमाणः
लोकेषुणानाल्पसुखावहेन
मोक्षार्थिना सिद्ध पथ व्रतेन।।५०।।

सर्वोविधिः सर्वनिधिश्चदुग्धः
वेदार्थवेदान्तगवांपयोधेः
सिध्दान्तभाण्डेसरहस्यकेस्मिन्
प्रपीयतां वै नवधारसौधः।।५१।।

**रामनारायणमिश्रः**

# सिद्धान्तरहस्यम्

## पूर्वार्धभागः

माचकुश्च माकुलक्ष्मी पृथिव्यौते उभे अपि गुरुपतित्वान्मातृत्वेनलातिगृह्णामितिमाकुलो जगन्नाथ एव माकुलाऽपरनामा?।

पाण्डुरंगं गुरुं शान्तं भीमातटनिवासिनं।

माकुलोऽहंसदावन्देभजतां भुक्तिमुक्तिदम्।।

**अथकविवाक्यं - चिन्मात्रमेकं परिपूर्णमाद्यं प्रकाशरूपंसद सद्विमुक्तं।**

**मायेक्षणेनैवजगद्विलासंश्रीविठ्ठलं सद्गुरुमानतोस्मि।।१।।**

अत्र श्री गुरुशिष्य संवादोन्मथित्तसिद्धांतरहस्यग्रंथ[१]प्रारीप्सुर्ज गन्नाथोग्रंथस्यनिर्विघ्न परिसमाप्स्यर्थं श्री सद्गुरुं स्वरूपतटस्थलक्षणाभ्यांलक्षीकृत्य शिष्टाचारपूर्वकं तन्नतिलक्षणं मंगलमातनोति चिन्मात्रमिति। (टीका) पूर्वंस्वरूपलक्षणैरेवसद्गरुंलक्षयति चिन्मात्रं केवलंज्ञप्तिरूपं एकं अद्वयं परिपूर्णं दिक्कालाद्यनवत्छिन्नं आद्यं सर्वकारणं प्रकाशरूपं अज्ञानतमोनिवर्त्तकं एतैः पंचविशेषणैः स्वरूपंलक्षीकृत्यपुनस्तटस्थलक्षणैर्लक्षी करोतिचतुर्भिर्विशेषणैः सदसद्विमुक्तं स्थूलसूक्ष्मरूपरहितं मायेक्षणेनैवजगद्विलासं मायायांयदीक्षणमवलोकनरूपोंगीकारस्तेनैवकारणेनजगद्विलासोजगद्रचन रूपाक्रीडाय-स्मिंतं श्री विठ्ठलं विदाज्ञानेनठान् शून्यान्लाति गृह्णाति यत्स्वयं तमेवश्रियारु क्मिण्या सहितं सद्गुरूं सतां ब्रह्मोपदेष्टारं आनतोस्मि सम्यक्नम्रीभूतोस्मीत्यर्थः।

**सद्गुरूरूवाच = ज्ञातंब्रह्मत्वयावत्ससूक्ष्मबुद्ध्याविनिश्चितं**

**सर्वप्रकाशकं सर्वकारणं निरपेक्षकं[३]।।२।।**

श्रीसद्गुरुः शिष्यज्ञान जिज्ञासार्थं पुनः स्वकृतोपदेशस्य साफल्यमुद्दिश्य ब्रह्मप्राप्तिविषयकं प्रश्नमापृच्छति ज्ञातमितिश्लोकद्वयेन हेशिष्य त्वया[४] मनोवेदांतश्रवणाद्ब्रह्मज्ञातं प्रमाविषयीकृतंवेतिवितर्कः ननुयस्मिन् सूरयोपिमुह्यंतित्तन्मया

---

(१) रव मातृकतायां ग्रन्थं पारीप्सुरिति पाठः।

(२) रव मातृकायाँ विनिश्चितम् इति पाठः।

(३) रव मातृकायाँ निरपेक्षकम् इति पाठः।

(४) रव मातृकायाँ त्वयामनसा इति पाठः।

सकृद्वेदांतश्रवणात्कथं ज्ञातुं शक्यतिति चेत्तर्हिसूक्ष्म बुद्धया विनिश्चितं सूक्ष्मया आत्मानात्मविचारवत्त्याबुद्धया विशेषेणनिः श्रेययोः[५] प्रापितं वेति पक्षांतरप्रश्नः ननुकीदृक्तद्यद्बहुबुद्धि

विषयं भवतीत्यत आह सर्वप्रकाशमिति सर्वस्यजड्वर्गस्य प्रकाशः प्रवृत्तिर्यस्मात्तत् पुनः कीदृक् सर्वकारणं सर्वस्यकार्यकारणरूपेण विराजमानस्यापिमुख्यं कारणमित्यर्थः। ननुघटादिकार्योपादानत्वात्तथानिमित्तत्वाच्च मृत्कुलालयोर्मुख्यत्वेपिदंडादिनासह कार्यपेक्षास्तीत्यस्यापिकालादिसहकार्यपेक्षाकल्पनीया स्यादतआहनिरपेक्षकमिति अन्य सहकार्य पेक्षाशून्य मित्यर्थः।।२।।

प्रत्यकप्रमातृरूपं यत्सर्वानुस्यूतमद्वयं।
अंतर्दृष्टयासर्वद्रष्ट्रदृष्टं किंवाथवानहि।।३।।

पुनः कीदृक् प्रत्यक् प्रतिशरीरमंतर्यामितत्यांऽचतीति प्रत्यक् पुनः कथं प्रभातरूपं सर्वंमहदादिप्रकर्षेणमिमीतइति प्रमाता सजीवोपिरूप्यते प्रकाश्यतेऽनेनेति प्रमातृरूपमित्यर्थः पुनः कीदृक् सर्वानुस्यूतं सर्वेषुमहदादिपृथिव्यंतेषुघटशरावादिषुमृदिवाभिव्याप्तं अद्वयं सजातीय विजातीयस्वगतभेदशून्यं पुनः कथंभूतं सर्वद्रष्ट्र सर्वासां बुद्धिवृत्तानांसाक्षीत्यर्थः नत्वयांऽत्तर्दृष्टयाबान्ह्यप्रवणशून्ययामनोवृत्यादृष्टं अपरोक्षीकृतंवेति ज्ञात विपये संशयः अथवानहीत्यज्ञातविपये संशयः।।३।।

शिष्य उ[६]वाच ज्ञातृभावेकथंज्ञे यंज्ञाना विषयलक्षणात्
वृत्याभावेकथंब्रह्मवृहंकत्वोपपादनात्।।४।।

एवं सद्गुरोर्ब्रह्म प्राप्तिविषयकं प्रश्नमाश्रित्यसच्छिष्यो वेदांत वाक्यार्थ श्रवणमननाभ्याँ कृतात्मानात्मनिश्चयः स्वकीय ज्ञानातिशयमाविष्कुर्वन्श्री सद्गुरुवाक्यमाक्षिपन्नि व प्रत्याचष्टे ज्ञातृभाव इति भो गुरवः युष्माभिर्ब्रह्मम ज्ञातमितिपृष्टं तत्रयतोवाचोनिवर्त्तंत अप्राप्यमनसा सहेतिश्रुत्यावाङ्मनसोरगोचरत्वाज् ज्ञानाऽविषयत्वेनज्ञातुरत्त्यंता भावेसति स्वरूपेज्ञेयतैवनसंभवतित्तर्हिज्ञातमितिकथं पृष्टमित्याक्षेपः। ननुमयाब्रह्मज्ञातमितिपृष्टं तत्र ब्रह्म पदार्थेवाग्वृत्तिविषयत्त्वंवर्त्तत एव कथमुच्यते वागगोचरत्वमित्यतआहबुद्धयभाव इति बृंहयितुं वर्द्धयितुं योग्यं स्वरुपाद्

---

(५) रव मातृकायां निश्चयोः इति पाठः।

(६) शिष्य उवाच इति एवं मातृकायाँ पाठः।

व्यतिरिक्तमन्यन्नास्त्यत स्तद भावात्वृंहकत्त्वाभावस्तदभावेचब्रह्मत्त्वमपिन सिद्ध्यतीत्यर्थः।।४।।

**सर्वप्रकाश्याभावत्वात्कथं सर्वप्रकाशकं।**

**कार्याभावेकथं सर्वकारणंभवतांमतं[७]।।५।।**

पुनः सर्वप्रकाशकमित्युक्तं तदप्येवमेवेत्यभिप्रायेणाह सर्वेति पुनर्देहोपिचिन्मयइतिवेदांत सिद्धांतान्नेहनानास्तिकिंचनेति श्रुत्या पुरुप एवेदं सर्वंयद्भूतं यच्चभाव्यमित्यादिना च सर्वस्य देहादिजडवर्गस्यचिन्मयत्त्वाविशेषान्यतर प्रकाश्याभावत्त्वेनतस्य सर्व प्रकाशकता न संभवतीत्यर्थः। एवं च पूर्व विशेषणेनैव तद्व्यतिरिक्तस्य कार्यकारणरूपेण विराजमानस्य महदादि प्रपंचस्याभावे सतिसर्वकारणमितिभवतां कथं मतं भवद्भिः कथं सम्मतमितिपुनराक्षेपः।।५।।

**सोकामयतश्रुत्यानुकथं तन्निरपेक्षकं।**

**परागभावात्प्रत्यक्त्वं कथं संगत्छतेपुनः।।६।।**

पुनः सर्वकारणत्वेपिनिरपेक्षकमित्युक्तं तदपिन संभवतीति श्रुतिप्रमाणेनाह सोकामयतेति सोकामयत इमान्लोकान्नसृज इति श्रुत्त्यास्वरूपेकामसंभावना संभवात्सह कार्यपेक्षाऽस्तीतिसिद्धमतोनिरपेक्षकत्वं वक्तुं न शक्यते अत्रदृष्टांतः यथाजलधौतरंगोत्पादनेच्छोत्पन्नासाऽनिल सहायत्त्वमपेक्षत एव तद्वदत्रापीत्यर्थः। तथा प्रत्यक्त्वमपिनसंगत्छतीत्याह परागभावादिति पराचः बाह्य शरीरादेरभावात् यत्पुरुषेणहविषादेवायज्ञमतन्वतेत्यादि श्रुत्यातथानाविदंयज्ञसंभारान्पुरुपावयवादृते। अतएव पुरुपावयवैरेतेसंभाराः संभृतामया इति संभृतसंभारः पुरुपावयवैरेतेसंभाराः संभृता मया इति संभृत संभारः पुरुपावयवैरहं तमेव पुरुषं यज्ञं तेनैवायजमीश्वरमितिब्रह्मवाक्येनचपदार्थमात्रस्यपुरूषव्यतिरेकेणासत्वात्तस्य प्रत्यक्त्वमंतर्यामित्त्व मपिन सिध्यतियतस्तस्यबाह्याभ्यं तर शून्यत्त्वादित्यर्थः।।६।।

**प्रमेयस्या निरूप्यत्त्वात्कथंतस्यप्रमातृता।**

**व्यक्ताभावात्कथंतद्धितदनस्यूतमुच्यते।।७।।**

पुनः प्रमातुर्जीवस्यप्रकाशमित्युक्तं तदपिनसमंजसमित्यभि प्रायेणाह प्रमेयस्येति। प्रमेयस्य प्रमाविषयी भूतस्य जगतोऽनिरूप्यत्त्वात्। वस्तुत्त्वेन

---

(७) रव मातृकार्यां मतम् इतिपाठः।

निरूपणासंभवतात्तत्प्रमातृतापिवस्तुतश्चिदंशस्यजीवस्य नघटतईत्यर्थः। ननुययेदंधार्यते जगत्तांजीव भूतांपरांमेवप्रकृतिं विद्धीत्यर्जुनं प्रतिभगवदुक्तेः कथं प्रमातृप्रमेययोरत्यंता सत्वमुच्यतेतत्राह एकोहंवहुस्यां प्रजायेयेतिश्रुत्यास्वरूपातिरिक्तस्याभावात्तत्प्रमातृतान सिध्यतीत्यतउभयोः प्रमातृप्रमेययोरपिप्रकृत्यं तर्गतत्वेनमिथ्यात्त्वात्तत्प्रकाशकतान संभवत्यर्थः।

एवमेवव्यक्तस्यबुद्ध्यादिप्रपंचस्यरज्जुसर्पवदवस्तु त्वेनभासमानस्यमाययाभूतभृन्न-पिवस्तुतोनाहं भूतस्थ इति भगवदुक्तेस्तदनुस्यूतत्त्वंनो चितमितिभावः।।७।।

**सजातीयादिहीनं चेदद्वयत्त्वं कथं पुनः।**

**अत निरसनेज्ञानं कल्पितं प्रतियोगितः।।८।।**

एवमद्वयत्त्वमुक्तंतदपि न संगच्छततीत्याह सजातीयादीति। पुनर्युष्माभिः सजातीयादिहीनत्वेनाद्वयत्वं साधितं तदपिन सम्यक् कुतइत्यपेक्षायामाह अतनिरसन इति अतस्तदतिरिक्त स्यसर्वस्य निरसनेअपोहे क्रियमाणेसति अभावज्ञाने प्रतियोगिज्ञानं कारणमिति न्यायादत(६क)ज्ञानं कल्पितं एवंच कल्पितमात्रस्यमिथ्यात्वादयथार्थ प्रतियोगिभेदशून्यत्वेनाद्वयत्वंन संभवतीत्यर्थः।।८।।

**दृष्टेरंतस्त्वबाह्यत्त्वेसर्वदैवविनिश्चिते।**

**तस्याः प्रवर्त्तकंद्रष्टृकथंदृश्यतयाभवेत्।।६।।**

पुनरंतर्दृष्ट्यादृष्टमितिपृष्टंतदपि निषेधयतिदृष्टेरिति दृष्टेर्मनोवृत्तेरंतस्त्वनामसंकल्पशून्यत्ववाह्यत्त्वंनामानुभूतादिविपय चिंतनंतदुभयमपि सर्वदाक्रमानुरोधनवर्त्ततेव तस्या अंतस्त्ववाह्यत्वविशिष्टायामनोवृत्तेः प्रवर्त्तकद्रष्ट्रसाक्षितया मनोवृत्तिरूपयादृष्ट्यादृश्यं प्रत्यक्ष विषयीकुर्त्तुं योग्यं कथंस्यान्नेतिंभावः यतोयन्मनोनमनुत इतिश्रुतेः यन्नपश्यतिपश्यतंचक्षुर्यस्यनरिष्यति तंभूतनिलयं(८अ) देवं सुपर्णमुपधावतेत्यादिवाक्यान्मनो वृत्यग्राह्यत्वेनस्वरूपेदृश्यतानिरस्ता।।६।।

---

(६क) रव मातृकायां न्यायादतो ज्ञानमिति पाठः। (६) ख) मायया इति (ख) मातृतकायाँ पाठः।।

(८) रव मातृकार्यां आह इतिपाठः।

(८अ) भूतनिलयंदेवमिति एव मातृकार्यां पाठः तदनुसारमत्रनिजयं पाठं संशोध्य लिखितम्।।

नित्यप्राप्तस्ययाप्राप्तिरुपचारस्तुकेवलं, 'तस्य प्राप्तौ चयः

प्रश्नोवागारंभणमेवतत्।।१०।।

ननुमास्तुमनोवृत्याप्रत्यक्षंत्वतुमनोवृत्तिलये - नापरोक्षानुभूत्याऽत्मप्राप्तिर्जातावानवेत्यताह[९] नित्येति नित्त्यं त्रिकालंस्वात्मत्वेनप्राप्तस्यपरमात्मनोयाप्राप्तिर्नवीनोलाभः सउपचारमात्रं, पुनस्तत्प्राप्ति विषयेयः प्रश्नस्तदपिकेवलंवागा[९]रंभणं वाग्विलासमात्रं यतोविस्मृतकंठगतचामीकर प्राप्तिरन्यबोधितापिकेवलमुपचारोऽलंकारमात्रंनतु तात्विकी तस्मात्तत्प्राप्ति विषय प्रश्नोप्यनर्थकएवेतिभावः।।१०।।

दृश्यतेत्वग्रययाबुद्ध्याबुद्धिग्राह्यमत्तीद्रियं

इतिशास्त्रविरोधोभूदतींद्रिय विशेषणात्।।११।।

एवंकृतात्मविमर्शनस्यापिममशास्त्र वाक्य भेदजनितः संशय उत्पनस्तन्निवारणं कर्तव्यमित्याशयेनाह श्लोकद्वयेन दृश्यत इति दृश्यतेत्वग्रययावुद्धयेति श्रुत्याबुद्धिग्राह्यं मतीद्रियमितिभगवदुक्त्याचातीं[९क]द्रियत्वविशेपणादुभयोर्विरोधः। यतोबुद्धेरपिज्ञानेंद्रियत्वादतींद्रियत्वं न संगच्छते तथा चातीं[१०]द्रियत्त्वविशेपणादुभयोर्विरोधः यतोबुद्धेरपिज्ञानेंद्रियत्वादतींद्रियत्वं न संगच्छते तथा चातींद्रियत्वेसतिबुद्धिग्राह्यत्वं न संगच्छते तथा चातींद्रियत्वेसतिबुद्धिग्राह्यत्त्व मपिन संभवतीत्यर्थः।।११।।

अतींद्रियंकथंत्वेतद्बुद्धिग्राह्यं कथं पुनः।

एतंमेसंश्यं छिंद्धिशास्त्रभेदभवं गुरो।।१२।।

एवंचैकस्मिन्स्वरूपेबुद्धिग्राह्यत्वातींद्रियत्वप्रतिपादकयोः शास्त्रयोर्विरोध जनितसंशयंमम भासमानंतं भोस्वामिन्स्वकृपया छिंद्धिछेदयेत्यर्थः।।१२।।

सद्गुरुरुवाच किंचिद्वैशिष्यमाश्रित्यमयाप्रश्नः

कृतस्त्वयि त्वदुत्तरं च विज्ञातुंतवज्ञानं परीक्षितुं।।१३।।

---

(९) रव मातृकायां वाचारंभणम् इति पाठः।

(९क) चातीन्द्रिय इति पाठः।

(१०) रव मातृकायां चातीन्द्रियत्व विशे. इति पाठः।

(११) निरूपितम् इति रव मातृकायां पाठः।

एवं श्री सद्गुरुः शिष्यस्वकीयं ज्ञानातिशय द्योतकं सिद्धांतप्रतिपादकमाक्षेपवाक्यमाकर्ण्यतस्योपशम · प्राप्तये पुनस्तद्वाग्व्यापारमपित्याजयितुं सिद्धांत प्रतिपादक माक्षेपवाक्यमाकर्ण्यतस्योपशम प्राप्तयेसुनिरुपणेनैवशास्त्रविरोध जनितसंशयं निराकरोति किंचिदिति सद्गुरुवाच हे पुत्र मयापिकेवले निष्कलंकेस्वरूपे किंचिद्वैशिष्ट्यंमायोपाधिरूपं संबद्धंस्वात्मध्यस्थमेवाश्रित्यतत्प्राप्ति विषयः प्रश्नः कृतः। वैशिष्ट्यं प्रकल्प्यप्रश्ने किं कारणमित्यपेक्षायामाह तव ज्ञानभूमिका जिज्ञासार्थं पुनस्त्वदुत्तरंविज्ञातुं किमयं प्रत्युत्तरं वदतीतिश्रोतुमित्यर्थः।।१३।।

**मद्वाक्यप्रतिवाक्येनत्वयासंतोषितोस्म्यहं**

**शास्त्रजसंशयं पृच्छे तंवेद्मितव पुत्रक।।१४।।**

पुनः शिष्यस्य प्रतिपक्षिवाक्येनस्वसंतोषमेव प्रदर्श्य कृपालुतयातत्संशयनिराकरणेप्रतिजानीते मद्वाक्येति हे शिष्यत्वयाममप्रश्नोपरिमद्वाक्यप्रतिवाक्येन मद्वचः प्रतिपक्षिवचनेन सिद्धांत निरूपणकृतं तेनात्यतं संतोषितोस्मि तथापिपुनः कंचिच्छास्त्र विरोधजसंशयं पृच्छेस्तंतवाहं वेद्मि।।१४।।

**ज्ञातृभावादियच्चोक्तंत्वयातत्सत्यमेवहि**

**अध्यस्थस्यापवादार्थं वैलक्षण्यं निरूपितं(११)।।१५।।**

एवंश्री गुरुः शिष्यवाक्यानुमोदनपूर्वकं किंचिद्विलक्षणं शिष्यसंशयनिरासकरं स्वाभिप्रायमाह ज्ञानाभा[१२]वादीतिज्ञाना विपयत्त्वाज्ज्ञातुरभावेनज्ञेयत्वादिकंत्वयानिराकृतं नतुसर्वसत्यमेव तथापि कर्मकांडनिष्ठैरिंद्रादेर्वज्र बाह्यादिरूपं पुनस्तत्प्रसादजन्य स्वर्गादिर्यतोयदास्यैदेवतायैह विर्गृहीतंस्यात्तांमनसाध्यायेद्वषट्करिष्यन्निितिनैरुक्त वाक्यान्तथाऽपामसोमममृ ताअभूमेत्यादि पुष्पितवाण्याऽध्यस्थंज्ञेयत्वेनप्रतिपादितं यतो वेदवादरताःपार्थनान्यदस्तीतिवादिनइतिभगवतस्तन्निषेधवचनात्तेषांमतंनिराकर्त्तुं पुनर्जायंते यच्चमसवाक्येनतेषां निंदयातद्वैलक्षण्यादिदमेव मुख्यंज्ञेयमितिज्ञेयत्त्वेनप्रतिपादितं तद्वाक्य मेवाह, सर्वेपुशश्वत्तनुभृत्स्ववस्थितंयथास्वमात्मान मभीष्टमीश्वरं वेदोपगीतंच न श्रृण्वते वुध्यामनोरथानां प्रवदंतिवार्तयेत्यादि वाक्यात्तस्यैवविश्वरूपत्वेन ज्ञेयत्त्वात्तदतिरिक्तस्य

---

(१२) ज्ञातृभावादिति रव मातृतकार्याम्।

ज्ञेयतानिरासार्थमिदमेवमुख्यं ज्ञेयमित्युक्तमतोनायं दोष इति भावः।।१५।।

**सोकामयतश्रुत्त्यावा अन्यःकर्ता निषेधितः।**

**सर्वंब्रह्मेतिश्रुत्यानिषेधितेकार्यकारणे।।१६।।**

पुनः सोकामयतेश्रुत्यातुस्वरूपेत्वयाकामसंभावनासंभा वितासापिनसंभवतीत्याह स इति सोकामयतेंत्यनया श्रुत्यासांख्यादीनांमतेप्रकृत्यादेः सृष्टिकर्तृत्वं प्रतिपादितं तन्मतमेवाह प्रकृतिं कर्त्रीपुरुषः पुष्कर पलाशवन्निर्लेइति अनयाश्रुत्यातन्निवोधितं एवं सर्वं खल्विदं ब्रह्मेतिश्रुत्याप्रधानं कारणं विश्वं कार्यं सर्वप्रकृतिपुरुषात्मकं चेदमुभयमपिनिरस्तं यतस्तस्मान्नह्यात्मनोन्यस्मादन्योभावोनिरूपितः। निरूपितेयं त्रिविधानिर्मूलाभातिरात्मनीति कृष्णोक्तयाब्रह्म व्यतिरिक्तस्याभावादित्यर्थः।।१६।।

**यदादृश्येवस्तुबुद्धिः सैवसूक्ष्मतमामता।**

**तयाविनिश्चितंयद्वैबुद्धिग्राह्यंतदेवतत्।।१७।।**

पुनरेकस्मिन्स्वरूपेबुद्धिग्राह्यत्त्वातींद्रियत्वजन्य विरुद्धधर्मकं संशयनिराकरोति यदेत्यादि श्लोकाद्वयेन तत्र द्वौक्रमौचित्त नाशाययोगोज्ञानं च राघव योगोवृत्ति निरोधः स्याज्ज्ञानं सम्यगवेक्षणामितिवासिष्ठोक्ते स्तत्र जाड्य पदार्थेवस्तुदर्शनस्य ज्ञानत्त्वाद्यदादृश्यते जडवर्गो वस्त्वेवेदं न जडमिति निश्चयवतीयाबुद्धिः सैवसूक्ष्मतमावेदोक्ताग्रयाबुद्धिस्तयाबुद्धया विनिश्चितं यद्वस्तुतदेव बुद्धिग्राह्यमितिश्रुतेव्यवहारो दर्शितः।।१७।।

**यदाविस्मृत्यदृश्यं वैस्वरूपेणव्यवस्थितिः**

**तदैवातींद्रियंदेयमुभयोरेषनिश्चयः।।१८।।**

पुनर्यदाकेवलस्वरूपाध्यासेनाचित्तस्यलयात्सर्वंदृश्यंजडवर्गं विस्मृत्याथारूपं हित्वास्वरूपेणावस्थानं जायते तदैव तदतींद्रिय मितिवक्तुं शक्यते एवं च स्वरूपे बुद्धिग्राह्यत्त्वातींद्रियत्वविशेषणयोः कालनिमित्तक ज्ञानविज्ञान रूपोपाधित्त्वादुभयोरप्याश्रयत्त्वमधिष्ठानस्य निरवद्यमितिभावः।।१८।।

**ज्ञातंब्रह्मत्वया प्रश्ने, यदुत्तरमनुत्तरं।**

**त्वया प्रज्ञाभिमानेन वचसा प्रत्युदीरितं[१३]।।१९।।**

---

(१३) रव मातृकायाम् प्रत्युदीकितम् 'इति पाठः

पुनर्ज्ञातं ब्रह्मेतिमयायत्पृष्टंतस्योत्तरमेवनास्तीत्यभिप्रायेणाह ज्ञातमिति। सद्गुरुणाशिष्यं प्रतिहे पुत्रत्वं यद् ब्रह्मज्ञानमिति ब्रह्म प्राप्ति परीक्षार्थं पृष्टं चेतत्रानुत्तर मेवप्रत्त्युत्तरंप्रलास्तत्रपरमानंदानुभवे वाग्वृत्तेरभावादित्यर्थः त्वया तु प्रज्ञाभिमानेन प्रज्ञाकृताभिमानात्छास्त्रसिद्धांतनिरूपणेन प्रत्युत्तरमुक्तं नत्त्वानर्थक्यं कथमित्य पेक्षायामाह वचनेनैव प्रोवाच सहितूष्णींबभूवेतिश्रुतेरितिभावः।।१९।।

सत्यमद्वैतमित्युक्ते खंड्यतेद्वैतवादिना।
अद्वैतंचेत्कथंब्रूषइतिमौनं सदाभ्यसेत्।।२०।।

ननूक्ति प्रत्युक्तिं विनासत्यासत्य निर्णयः कथं स्यात्तत्राह सत्यमिति हे शिष्यद्वैतवादिना सहविवादे सति एकमेवाद्वितीयं ब्रह्म नेहनानास्ति किंचनय इहनानेवपश्यतिमृत्त्योः समृत्युमाप्रोति एकं सद्विप्राबहुधावदंतिएकं सन् बहुधाकल्पयंति। मत्तः परतरंनान्यत्किंचिदस्तिधनंजय अहमेवासंमेवाग्रेनान्यद्यत्सदसत्परं[14] पश्चादहं यदेतच्चयोवशिष्येतसोस्मयहं ज्ञानं विवेकोनिगमस्तपश्चप्रत्यक्षमैतिह्यमथानुमानं आद्यंतयोरस्ययदेवकेवलं कालश्चहेतुश्चनदेव मत्ध्यत्यादिश्रुति स्मृति पुराणवाक्यैरद्वैतमेवसत्यं तदतिरिक्तं सर्वद्वैतं निर्मूलमसदित्याग्रहेणस्वयमेव खंडयतेपराभूयते कथमित्यपेक्षायामाह अद्वैते तु द्वितीयस्य प्रतिवादिनोऽभावात्केनसाकं ब्रूषेब्रवीषीतितस्मान्मौनमेव सदाभ्यसेत् आत्मविमर्शनमेवपुनः पुनः कुर्यादित्यर्थः।।२०।।

वाचोदितंमनोध्यातमुभयंस्वप्न संस्तुतं।
तयोर्भोगावसाने तुप्रबोधेलीयतेक्षणात्।।२१।।

ननुज्योतिष्टोमेन स्वर्ग का मोयजेति तिश्रुत्याज्योतिष्टोमस्य स्वर्ग फलकत्त्वाद दृष्टम प्यामुष्मिकं स्वर्गादि सुखंकामि भिर्मनसाध्यायमानं पुनरिदानीमपि जन्मांतरीयसत्कर्मणा प्राप्त प्रत्यक्षमनुभूयमान मैहिकं राज्य स्त्रीधनलाभादि सुखं धर्माविरुद्धवेद प्रतिपादित मेतदुभयंत्यत्क्वा केवल शुष्कान्त विमर्शनैकंचिद्विशेषलाभं विनालोक वेदवादाभि र्निवेशिनां जनानां प्रवृतिः कथं स्यात्तत्राह वाचोदितमिति। यदायमनुगृह्णाति भगवानात्म भावितः स जहाति इ मंलोकंवेदे च परिनिर्ष्ठित मिति नारदोक्तेः स्वात्मत्त्वेन परिभाषितः सत्यं प्रत्यनुग्रहं प्रसादं करोति सलोकवेदयोः क्षुद्रानंदं प्रदायत्तत्परिनिष्ठितां मतिं जहा तिवेदप्रतिपादित कर्मजन्य फल भोगवासनां परित्यजति यतः किंभद्रं किमभ

---

(१४) रव मातृकायाम् सरसत्वरम् इति पाठः

द्रंवाद्वैतस्यावस्तुनः कियत् वाचोदितं तदनृतं मनसाध्यातमेव चेति भगवदुक्तेः, पुनस्तत्प्रसादादेव सर्वोत्तमपरमानंदलाभ प्राप्तेस्तस्मात्तदुभयमपिसुखं विपयिणां क्षुद्रानंदप्रदाय स्वप्रसंस्तुतंस्वप्र साम्येन निर्दिष्टमैहिकामुष्मिकं पुनस्तदपितद्भोगावसाने साक्षात्कार समाप्तौ बोधावस्थायां च क्षणाल्लीयते गंधर्व नगरवदंतर्दधातीत्यर्थः। ननु बोधावस्थायां नश्यतु परंतुसावस्थे द्रादीनामपिदुर्लभाऽ तस्तत्प्राप्तेः पूर्वभोक्तव्यं खल्बितिचेतत्राह यतो भोक्तृ भोग्ययोर्मध्येऽन्यतरनाशस्यावश्यं भावित्त्वा द्भोगकालेपिक्षोभः स्यादेवातउभयाभिनिवेशंत्यत्क्वा केवल मात्मविमर्शनमेवकर्तव्यमिति तात्पर्यार्थः।।२१।।

**प्रकृत्या प्रत्ययोभिन्नकेवलानंद आश्रयः।।२२।।**

ननु किं स्वरूपोयमात्मायतस्तस्य विमर्शनं कर्त्तव्यंतत्राह नारायणेति।। यदा प्रकृत्या माययासहैकीभूय विश्वस्योद्भावादि हेतुरपिस्वयमहेतुः स्यात्तदानारायण शब्द वाच्योभवति यदाजाग्रदाद्यवस्थास्वन्वितः सन्बहिरपिव्यतिरेकेणव र्ततेतदाब्रह्मेतिशब्दवाच्योभवति यदादेहेंद्रिय प्राणांतःकरणानि येन जीवितानि संति स्वस्वव्यापार समर्थानि भवंति तदापरमात्मे तिशब्द वाच्योभवति स एवात्मा विमर्शनीय इत्यर्थः। नन्वेवमपिमायांगीकारात्सोपाधिक एवेतिचेतत्राह आश्रय इति नारायणेति ब्रह्मे ति परमात्मेति[२२] गछते।। विश्वाभास निरोधौयतोनिमित्त भूतादध्यवसीयेते सएवाश्रयत्त्वान्निरूपाधिक एवेतिभावः। ननुविश्वाभास निरोधयोर्जी वावृष्ट[२३] प्रयुक्त त्वाज्जीवस्वचेतनांशत्त्वाच्चसजीव एवाश्रयो स्तुयतश्विते न हृदयं चैत्त्यः क्षेत्रज्ञः प्राविशद्यदा विराट तदैव पुरुषः स लीलादुदतिष्ठत इतिक पिलोक्तेस्तत्राह विशेषणद्वयेन प्रत्ययोर्भिन्न इति च जीवस्यतु प्रकृत्त्यंतर्गतत्त्वात्त द्भिन्नत्त्वं सर्वांतर्यामित्वमपिचन

---

(१५) ख मातृंकायास्ट स्वर्गादिफलकं कामिमिर्मनसा ध्याय मानमितिपाठः।

(१६) ख मा० केवलं ''इतिपाठः। (१७) ख मातृकार्यो सुद्रा नंदंप्रदाय इति पाठः।

(१७) क्षुद्रानन्दमिलपि ख मातृकायाः टिप्पण्यां लिखितम्।।

(१८)

(१९) ख मातृकार्यां पीरनिर्टष्टताम् इति पाठः

(२०) प्रदाय इति ख मातृकार्या पाठः

(२१) ख मातकायाँ क्षुद्रानंदं प्रदायेति पाठः।।

(२२) ख मातृकार्यां संगच्छते इति पाठः

(२३) ख मातृकार्यां जीर्वा अदृष्ट प्रभुक्तेम्त्वात् इति पाठः।

सिद्ध्यतीत्यर्थः। कथमंतर्यामित्वमित्य पेक्षायामाह तत्सृष्ट्ठा तदेवानुप्राविशदितिश्रुत्या प्रतिपदार्थे अयति अंतर्यामि तथाप्रविशतीति प्रत्ययः। अस्मिन्नर्थेसोपाधिकत्त्व महमेवाशंक्यार्थांतरेण व्याख्यास्ये प्रतीति प्रज्ञेति प्रत्ययः प्रज्ञानं व्रह्मेति श्रुतेः। नन्वसद्वाइदमग्र आसीत्ततो वैसदजायतेति श्रुत्यातथाचाव्यक्तादीनिभूतानि व्यक्त मध्यानि च भारत अव्यक्त निधनान्येवतत्रकापरिदेवने तिस्मृत्त्या चसृष्टिसंहारयोः प्रधाननिमित्तत्त्वंसूचितं तर्हिकिमर्थं तन्निपिध्यते तत्राह आत्मावाइद मेकएवाग्र आसीन्नान्य त्किंचन मिषदित्त्युपनिपदा ईक्षतेर्नाशब्द मितिन्यायाच्च सृष्टेः शून्यपूर्वकत्वं निषिद्धं ननुतर्हि पूर्वश्रुतिस्मृत्योः कोभिप्रायस्तत्राह कार्यरुप सृष्टे रसत्त्व प्रति पादनायतत्त्कारण स्याप्यसत्वं प्रतिपादितमतोनविरुद्धमितिभावः। पुनराश्रयादिनाम्नावर्णितः सकिंरूपित्यपेक्षयामाह केवलानंदरूपइति कैवल्य सुख रूपइत्यर्थः।।२२।।

बुद्ध्यासमेत्य विषयी विरागीतदरात्।।

आदरानाद रौत्यत्क्वाबोधरुपः स्वयंभवेत्।।२३।।

ननु नारायणो मायाया अंगीकारेप्यलुप्तैश्वर्योनित्यानंदरूप एवतिष्ठतितर्हि जीवस्यापि वस्तुतस्तदंशत्त्वात्त त्सरूपत्त्वमेवयोग्यंपुनः किमपराद्धमनेन यतो माययांतर्हि तैश्वर्यित्त्युच्यते तत्राह बुद्ध्येति बुध्यासमेत्य विपयवती बुद्धि तादात्म्येनांगी कृत्यतद्गतधर्मात् सुखदुःखादीनात्मनि मत्त्वा जीवोविपयीभवति। पुनः सएवंतदना दरात्तस्या विपयवत्त्या बुद्धेरनंगीकाराद्विरागी वैराग्यवानित्युच्यते आंदरानादा रौत्यत्क्वातस्या भोगत्यागाभिनिवेशमवस्तु बुद्ध्यापरित्यज्य स्वयंतदाबोधरुप एवभवेत् ईश्वरस्त्वलुप्त नित्य चिच्छक्ति त्त्वात्तां मायांगुणबुध्या जीर्णांत्वचं सर्पइव नांगीकरोतित तस्तस्मिन्नीश्वरे सैव विद्यारुपेण परिणामं प्राप्य नित्यानंदरूपतां प्रकाशयति। जीवस्तु तां गुण बुद्ध्यांगी करोति ततस्तस्मिजीवेसैवा विद्यारूपेण परिणतिं प्राथानंदाद्यावरणं करोति एवं च दोष गुण बुद्धिभ्यामं गीकारदेवेश्वर जीवयोर्ज्ञानाज्ञानकृतोभेदोन वस्तुत इत्यर्थः।।२३।।

विचिंत्य समता पूर्वं वाच्यवाचकतांगतः।

जिज्ञासितमधितंचत्यत्क्वोदास्तेतदोभयं।।२४।।

नन्विहैवतैर्जितः सर्गोयेषांसाम्ये स्थितंमनः निर्दोषंहि समंब्रह्मतस्माद्ब्रह्मणितेस्थिताः शुनि चैवश्वपाकेचपंडिताः समदर्शिनः। सिद्ध्यसिद्ध्योः संमोभूत्वासमत्वंयोग उच्यतइत्यादिभगवदुक्तयासर्वत्र साम्यमवलोकनीयंपरंतुतत्केनोपायेन साध्यंस्यात्तत्राह विचिंत्ये समतायाः पूर्वं।। साम्या वस्थायाः प्राक्।। वाच्यवाचकतां।। वाच्यं जगत्

वाचकः प्रणवस्तयो र्भावस्त त्तातां विचिंत्यपर्यालोच्यततः पर्यालोचनानंत रतदर्थंयदधीतमुपनिषदादितदुभयं त्यत्क्वोदास्ते साक्षिवद्वर्तत इत्यर्थः यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति तदागंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य चेतिभगवदुक्तेः सर्वमनो व्यापारादप्युपरमत एवेत्यर्थः।।२४।।

## सैनमाकर्षते तावत्स्वरूपाच्च्याविवुबलात्।।२५।।

ननुब्रह्मनिष्ठानांबाधितत्तानुवृत्तौकोदोषोयतोऽत्याग्रहेणोपरमेदेवेत्युच्यते तत्राह बाधितेप्विति जीवन्मुक्तस्यापि संस्कारवशादवस्तुत्वेन बाधि तेष्वपि विषयेपुयावद नुवृत्तिर्मनसितीव्रस्वरूपाध्यासेनन लीयते सैव बाधितानुवृत्तिरेनं जीवन्मुक्तमपिस्वरूपाच्च्यावितुमानंदानुभवाद्भ्रंशयितुंबलादाकर्षत एवदेह तादात्म्यं जनयित्वा सुखदुः खादिसाक्षात्कारं ददात्येवेत्यर्थः तस्मात्तरति शोकमात्मविदितिश्रुत्या पुनर्यस्मिंस्थितोनदुःखेन गुरुणापिविचाल्यते तंविद्याबाधितेष्वनुवृत्तिर्नोया वन्मनसिलीयते। ।।दुःख संयोग वियोगंयोगसंज्ञितं दुःखेष्वनुद्विग्नमनाः सुखेपुविगतस्पृहः वीतरागभय क्रोधः स्थित धीर्मुनिरूच्यते। आत्मानं चेद्विजातीया परंज्ञानधुताशयः किमिच्छन्कस्यवाहेतोर्देहंपुष्णातिलंपट इति श्रुतिस्मृति पुराणसंमतेनात्मज्ञानिनादेहतादात्म्याभावान्नसुखदुःखादिसाक्षात्कारः संभवितुमर्हतीत्यत आत्मज्ञानिभिरपिमनसः संकल्पोपरामेध्यानधारणादिभिर्दृढः प्रयत्नः कार्यः यतोनकुर्यात्कर्हिचित् संगंमनसि ह्यनवस्थिते यदि श्रंभाच्चिराच्चीर्ण चस्कंदतपऐश्वरमिति ज्ञात्वायोगीश्वरेऋषभादिभिः सिद्धयादीनामनंगीकारात् एवं श्रीकृष्णेनाप्युद्धवंप्रतिपूर्वंधनार्विभावतिरोभावाभ्यांरवेर्मालिन्याभावत्त्वदृष्टांतेन पुनर्वारवन लादिसंसर्गेणनभ सोऽसंगत्त्वदृष्टांतेन च विचारित स्वरुपस्यज्ञानि न इंद्रिय संयमविक्षेपाभ्यांगुण दोषौनिषेधि नौ तथा प्यग्रेपुनरुक्तं किमित्यपेक्षायामाह तथापि संगः परिवर्जनीयोगुणेषुमायारचितेषुतावत् मद्भक्तियोगेन दृढेनयावद्रजो निरस्येतमनः कषायइति। तस्मात्सर्वथामनसो विश्वासोऽस्याभिर्जितमितिनकार्य इति भावः।।२५।।

## तथापि प्राप्य तेनैव संकल्पोपशमंविना।।२६।।

ननुतत्वमस्यादिमहावाक्य श्रवणात्प्राप्तात्मनांबाधितानुवृत्ति र्नदोषायेतिवेदांतनिष्ठैः प्रतिपादितमन्यथानारदव[२५] सिष्ठदूर्वास[२६] आदीनां जीवन्मुक्तत्वंन स्याद्यतस्श्रीविरह

---

(२४) ख मातृकायाँ जिसासेतमधीतं च पाठः

(२५) ख मातृ कायाँ नारद वशिष्ठ इतिपाठः

(२६) ख मातृकार्या दूर्वासादीनाम् इतिपाठः

पुत्रनाशेसुदर्शनतायजनित दुःखैरभिभूतत्वादिति शिष्य संदेहं स्वयमेवाशंक्यत्तत्वमस्यादिमहावाक्य श्रवणाद्नुभवपर्यंतं ज्ञानं शमादि साधनाधिक्यं विना नोत्पद्यत इत्याशयेनाह तत्त्वमसीति तत्वमसीतिपदत्रयं तत्रतत्पदार्थः सर्वज्ञत्त्वादिगुणः परमात्मा तथा त्वं पदार्थः किचिज्ज्ञो जीवः अनयोस्तत्त्वं पदार्थयोरैकात्म्य बोधक तत्त्व मस्यादि वाक्यार्थ ज्ञानात्प्राप्तइवेयते।। बोधक मसीति पदम् ननुतयोरैकात्म्यमेवन संभवति यतईश्वरस्येंद्रियागोचराणामपिसर्वपदार्थानां नित्यं ज्ञानमस्तिजीवस्य तुसन्निकृष्ट पदार्थस्यापि यथार्थ ज्ञानंनास्त्यतस्तयो र्महदंतरत्त्वात्कथमैकात्म्यमुच्यत इतिचेतत्रगुरोरभि प्रायानुरुपंशास्त्र प्रमाण पूर्वकं तयोरी शजीवयोश्चैकात्म्यं विशदीकरोमि पुरुषेश्वर योरत्रनवैलक्षण्यमण्वपि तदन्यकलपनाऽ पार्थाज्ञानं च प्रकृतेर्गुण इति भगवदुक्त्या पुनर्जीवेश्वरपरमात्माच पर्यायौनात्रभेद धी रिति श्रीरामोक्त्या चसर्वज्ञत्व किंचिज्ज्ञत्त्वयोः प्रकृतेर्गुणत्वाद्विशेषणांशत्याग पूर्विकांजहद जहल्लक्षणयालक्षितां तयोरीशजीवयोश्चिदात्मतां ज्ञात्वा अद्वयः सन्नुपरमेतत्कथमित्य पेक्षायामाह, तत्त्वंपदयोर्द्वौद्वावर्थौवाच्यार्थोलक्ष्यार्थश्चेति तत्रतत्पदस्यमायोपाधिः सर्वज्ञत्वादिविशिष्टो वाच्यार्थः। तथात्वं पदस्यमाया कार्याविद्यायुक्तांतः करणोपाधिर्वाच्यार्थः एवंचोभयोरपि ज्ञानाज्ञानविशेषणोपाधिपरित्यागेन शुद्धचिदात्मालक्ष्यस्तत्र वाच्ययोर्विरुद्ध धर्मकत्वादैक्यासंभवेपिलक्ष्ययोरैक्यं निखद्यमेवेति भाव;। एवं चैक्य ज्ञानाद्योगारू ढोभवतित तथापियोगारुढस्य तस्यैवशमः कारण मुच्यते ज्ञानाद्ध्यानंविशिष्य त इति च भगवदुक्त्या आरुढयोगस्यापिशमध्यान योः प्राधान्यात्ताभ्यां विना केवलमीशजीवयो रैकात्म्य श्रवणात्परोक्ष ज्ञानमेवभवतितेन चात्माप्राप्तइवेयते प्रतीयते परंतु नैव प्राप्यतइत्यर्थः। तस्माच् च्छ्रीव्या सादिभिर्भारतादिषु श्रीरामकृष्णाद्यवताराणां सुखार्थ दुःख प्रतीकारार्थं च यततामपिसर्वमिदमीश्वराणां मनुष्य नाट्य प्रदर्शनार्थ मनुकरणमात्रंनतु तात्विकमिति प्रतिपादितं नारदादीनांतुमानभंग निमित्तानिकर्माणि राजकन्या वरणाशया पर्वत ऋषिणासहविवादे सति विष्ण्वा श्रयणं पुनस्तस्यापिकापट्यं दृष्ट्वा तस्मैशापस्तथानिमियज्ञे तत्कृता स्वा वज्ञादृष्ट्वातस्मै वसिष्ठशाप स्तथांबरीषस्य पारणेऽतिकुपितस्यदूर्वाससः शापः पुनः शोकाद पितत्परिहारार्थं कर्माणि सर्वा ण्येतेषां लोक संग्रहार्थ मनुकरण मात्र मिति तैर्न प्रतिपादितं किंतु प्रारब्ध वशात्सत्यात्त्सत्वे नैवोक्तं नन्वितर जीव जीवन्मुक्तयोर्दुः खाद्यनुभव स्य साम्यंचेत्कथंतर्हि जीवन्मुक्त दशावेदातं शास्त्रे श्रेष्ठ त्वेन प्रतिपादितातत्राह। सत्त्यंतथापि जीवन्मुक्तानांदुःखानुभवेपिमिथ्यात्वा नुसंध्यानाद्भुत्पन्नमपिदुः खंक्षणान्नश्य ति मूर्खाणां तु देहादिपुसत्यत्वाभि निवेशादाभूतसं प्रवंसत्ततंदुःख रूपत्व मेवतस्मादज्ञान

ज्ञानिनोर्महदंतरं पुनर्जीवन्मुक्तानामपिमध्ये उपशमादि तारतम्यात्सुखा दितारतम्यं यथाशुकजनकयाज्ञवल्क्यादीनामुपशमादिसाधनाधि क्यात्क्षुत्पिसा दिभिरप्य नभिभूतत्वं न तु तथेतरेषामितिभावः। अतो महावाक्य श्रवणात्परोक्षज्ञान मेवभवति आपरोक्षानु भवार्थं तु मौन ध्यान धारणादि भिर्यतितव्यमिति फलितोर्थः।।२६।।

**ममप्रश्नं निराकर्त्तुंत्वया प्रज्ञाभिमानसः।**

**प्रत्युक्तः शास्त्रसि द्धांतइत्येषा पूर्णतातव।।२७।।**

ननु सर्वमिदमंगीकृतेपरंतुमयायुष्मत्प्रश्न प्रत्युत्तरंकृतं तत्सत्त्वंवासत्त्वं तत्राह ममेति हे शिष्यत्ववर्याः मत्प्रश्नोत्तरंकृतं तत्तु शिष्यो पदेशार्थं योग्यं परंतुममगुरोः समीपेऽनुचितमे वत्वयानुमम ब्रह्मप्राप्ति विषय प्रश्न खंडन मिषेण प्रज्ञाभिमानसः प्रज्ञाकृताभिमाना च्छास्त्र सिद्धांतः प्रतिवचनीकृत इत्येवतवापूर्वाऽपक्वतेत्यर्थः।।२७।।

**गुरोर्लोपोनकर्तव्योब्रह्मिष्ठेनापिसर्वशः।।**

**गुरुशिष्य प्रचारार्थं किंचिदुक्तंमयोत्तरं।।२८।।**

ननु मदुक्तमपिनिराकर्तु मत्त्याग्रहेण युष्माभिरपि सिद्धांत निरुपणं क्रियत एवेति चेतत्राह गुरोर्लोपइति श्री सद्गुरुमूर्त्तेर्लोक साम्य दृष्टयालोपोऽनादर दृष्टि र्ब्रह्मिष्ठेनब्रह्मनिष्ठां प्राप्तेनापि न कर्त्तव्या। ननुगुरोः कर्मजन्यदेहत्वात्कामक्रोधा दिमत्त्वाच्चकथं लोकसाम्यं न स्यात्तत्राह नगुरोर धिकं पद मिति शास्त्र निर्णयात्सा क्षाद्गुरुरे व परंब्रह्म इतरेब्रह्म विष्णु महेश्वरागुरोरंश भूताएव गुरोर्देहस्तु जगदुद्धारार्थं चिद्विलासरूप एव नतुकर्मजन्य इति मंतव्यं कामक्रोधादीनांतु रामकृष्ण नृसिंहादि वदनु करणमात्रं न तु तात्विकं नन्विदंभक्ति मात्रमन्यथा सर्वेपिब्रह्मोपदेष्टा रो राम कृष्णाद्यवता रसमानाएवस्युः को विशेषस्तेष्वेतिभ्यधिकास्तथा चसति गुरुमेवसर्वे किन्न भजंतीत्यत्रश्रुति प्रमाणेनाह यस्यदेवे पराभक्ति र्यथा देवे तथा गुरौ तस्यैतेक थिताद्यर्थाः प्रकाशं ते महात्मनइति श्रुत्त्या गुरौलोकसाम्यं पश्यतोर्थान सिद्धयंतीत्यर्थः। परंतु श्री सद्गुरु भक्ति रसिका एवं भूताविरलाइत्यर्थः अतोमयापिगुरु शिष्य सं प्रदाय प्रवृत्यर्थं पुनस्तवसमाधि संपाद नार्थ किंचित्प्रत्युत्तरं कृतमित्यर्थः।।२८।।

**अहंभावमनापन्नः कर्तनैव सउच्यते।**

**नचास्येहाभवोबाधस्तेन प्रश्ने कृते कृते।।२९।।**

नन्वेव मप्युत्तर प्रत्युत्तरयोः कर्त्रनुसंधान पूर्वकत्त्वात्कर्तृ भिर्निवेशः स्या देवेत्यताह अहंभावमिति यस्य नाहंकृतोभावो बुद्धिर्यस्यनलिप्यते हत्वापि सइमान्लोका न्न हंतिन

निबध्यते। नैव किंचित्करोमीतियुक्तोमन्ये ततत्त्व विदित्त्या दिनासंगंत्यत्क्वात्मशुद्धय इत्येंतेन भगवदुक्तेनदेहाहंकार हीनः सदेहगत कर्तृत्त्वं स्वात्मनिनमन्यते अतोऽस्यदेहमनोजन्य चेष्टयाबाधोन भवति तस्मादकर्त्तुः कर्तृत्त्वाभिनिवेशस्तेन प्रश्ने कृतेऽकृतेवाऽन्यस्यखंडिते पिन संभवितुमर्हति, यत स्तस्य प्रकृति गुणेष्वेव कर्तृत्त्वानुसंधानादित्यर्थः।।२६।।

**संकल्प जाल मुत्छिद्यबिंबभूतः स्वयंतदा**

**परमात्माविभुः साक्षादंतः स्फुरतिनिर्मले।।३०।।**

एवं श्रीसद्गुरुः शिष्यस्य स्वरूपे बुद्धिग्राह्यत्वांतीद्रियत्त्वादिसर्व संशयं सिद्धान्त निरूपणेनापाकृत्त्य पुनस्तंप्रीतमनाः सन्नात्मा[२८] पारोक्ष्य सिद्धयर्थं कृपालुतया किंचिदंत रंगसाधनमाहश्लोक त्रयेण संकल्प जालमिति, संकल्पजालं संकल्प मूलभूतवासना विस्तारं उच्छिद्य उत्कृत्त्य निर्मलेऽतंः करणे सति विभुः परिपूर्णः परमात्मासाक्षाद्बिंबभूतः स्वयमेव स्फुरति पश्चात्तस्य न किंचित्कृत्यमवशिष्यत इति यस्त्वात्मरतिरेवस्या दात्मतृपश्चमानवः आत्मन्येवच संतुष्ट स्तस्यकार्यं न विद्यते सदात्योतीहयादुः खमनीहाया; सुखावृत इति श्री कृष्ण प्रल्हादाद्युक्तेरतः संकल्प नाशेयलं कुर्विवितिशेषः।।३०।।

**संकल्पहा नौतेशक्तिर्नास्ति चेन्मास्तुमानसे**

**आश्रयव्याप्य तांध्यात्वानिर्भयत्वं प्रपद्य से।।३१।।**

पुनः संकल्प नाशस्य दुष्करत्त्वंमत्वा संशयितुं शिष्यं प्रत्याह संकल्प हानाविति। हे शिष्य प्राक्कर्मवशात्संकल्प परंपरायावायो र्निमित्तभूतात्सागर तरंगाणामिवोच्छेदे तवशक्तिः सामर्थ्यं नास्ति चेन्मास्तुपरं तु माभैः किंकृत्त्वेत्यत आह मानसे संकल्पोत्पत्ति स्थाने आश्रयव्याप्यतां आश्रयस्य सर्वाधिष्ठानभूतस्य व्यापक रूपस्य परगात्मनोव्याप्यतांध्यात्त्वानिश्चित्त्य कथ मित्यपेक्षायामाह हेमनस्त्वं चांचल्य स्वभावात्सर्वत्र गच्छसिचेद्यथेष्टं गच्छ परंतु विश्वव्यापिनिगोविंदेतं विहायक्वयास्यसीत्याशिक्ष्य निर्भयत्वं द्वितीयाभिनिवेशाभावात्प्रपद्यसेत्वमिति शेषः यथा समुद्रतरंगावायोर्वशाद्वहुक्षोभिता अपिजलधिं विहाय न प्रवर्तंते एवं चांचल्य स्वभावाद्बहुक्षोभितमपिमन आश्रयं विभुंयं विनाऽन्यत्र नगच्छतियत आश्रय स्यविभुत्वादित्यर्थः।।३१।।

---

(२७) ख मातृकायाँ पूर्णताऽपक्वते त्यर्धः पाठः।

(२८) ख मातृकायाँ सन्नात्माऽपारोक्ष्य इतिपाठः।

नामसाद्धयेश्वरोभावस्तन्नामगुरूभक्तिः ।।३२।।

नन्विदं सकृन्महावाक्य श्रवण पूर्वकात्मविमर्शनात्संकल्पोपशमद्वारा झटित्यनुभवितुं सुलभमेवदृश्यते, तर्हि श्रीव्यासोभारतादिष्वात्मतत्त्वस्य ज्ञानैकसाध्यत्त्वात्त ज्ञानसाधनभूतानिसत्कर्मतीर्थ सेवनतप आदीनिवैराग्यपूर्वकाण्युक्तवान्। पुनस्तज्ज्ञानस्यापि बहुसाधन साध्यत्त्वोदुर्लभत्त्वं मत्त्वाश्रीनारदप्रेरितोभगवद्गुण वर्णन पूर्वकं भक्ति प्रधानं भागवतशास्त्रं किमर्थं कृतवान्? यतोमहावाक्य श्रवण मननाभ्यामेव कार्योत्पत्तेरितिशिष्य शंकास्वयमेवाशंक्य भक्तिप्राधान्यं विचक्षोः श्रीगुरोर भिप्रायं शिष्य संदेह प्रत्युतराभ्यां वर्णयिष्यामः तत्रगुरुत्तरमाह हे पुत्र शमादिसाधनचतुष्टयसाध्य मुमुक्षुतामंतरेण महावाक्य श्रवणेप्यधिकारोनजायते पुनः का वार्त्ता विमर्शनानुभवयो रतोभक्तिर्जनित्रीज्ञानस्य, भक्तिर्मुक्ति विधायिनीतिसदा शिवोक्तया तथा तस्मान्मद्भक्ति युक्तस्य योगिनोवै महात्मनः नज्ञानं न च वैराग्यं प्रायः श्रेयोभवेदिहेति कृष्णोक्तया पुनः प्रीतये ऽमलयाभक्तया हरिरन्यद्विडंवनमिति प्रल्हादोक्तया चभक्तेरेव प्राधान्यात द्भक्तिप्रधानंशास्त्रं कृतवानित्यर्थः तत्रशिष्यः शंकते ननुब्रह्मविदा ज्योतिपरं ब्रह्मविद्ब्रहमैवभवति तमेवविदित्त्वातिमृत्युमेति, ज्ञानादेवतु कैवल्यं नान्यः पंथाविद्यते अयनाय नहिज्ञानेनसदृशं पवित्रमिह विद्यते तपस्तीर्थं जपोदानं पवित्राणीतराणिच नालंकुर्वंतितां सिद्धिंया ज्ञानकलयाकृतेत्यादि श्रुतिस्मृतिपुराणेपुज्ञानं विना मोक्षोन सिद्धयतीत्युक्तं तस्माज्ज्ञानादेवतुकैवल्य मित्यत्र एव कारेणमुक्तिं प्रत्यन्यसाधनस्य निषेधात्कथं भक्ति र्मुक्ति विधायिनीत्युत्त्यते अतएववयुनः काश्यांतु मरणान्मुक्तिसाधन वचनेषुवेद सिद्धान्तवचन विरोध परिहाराय पंचम्यर्थः प्रयोज्यत्त्वमितिशास्त्र विद्भिः प्रतिपादितंनतु साक्षात्कारणं किंतुतत्वज्ञान द्वारा परंपरा संबंधेन कारणं एवमेवात्रापियोज्यमन्यथासिद्धांत वाक्य विरोधापत्तेः। पुनरत्रशिष्य संशय निवृत्त्यर्थं वक्ष्यमाणगुर्वभि प्रायानुरूपंभक्ति स्वरुप निर्णये वर्णयिष्यामः। कथंगुर्वभिप्राय इत्यपेक्षायांत मेववक्ष्ये भक्तेः प्रयोजकत्वकरणम किंचित्कर मेवयतो ज्ञानस्यैवा वांतरविषेप आराध्यत्त्व प्रकाकारकाराध्य विशेष्यको भक्तिरित्युच्यते तथा सतिनायंवाक्य विरोधोयतोभक्तेरेव ज्ञानत्त्वाविशेषादितिभावः। ननुतथापिभक्तौसोपाधिकत्त्वात्किचि न्नन्यूनतावक्तव्या, कथमुच्यते केवलज्ञानादप्यधिकेति तत्राह नैष्कर्म्य मप्यच्युत भाववर्जितं न शोभते ज्ञानमलं निरजनं राजन्यति गुरुरलंभवतां यदूनां दैवं प्रियः कुलपतिः क्वचकिंकरोवः अस्त्वेवमंग भगवान्भजतां मुकुंदोमुक्तिं ददातिकर्हिचित्स्मनभक्तियोग मिति नारदः शुकाद्युक्तेः केवलज्ञान मुक्तयोरपिभक्तेः श्रैष्ट्यं सिद्धैरेव प्रतिपादितं तथा च क्लेशोधिकतरस्ते

षामव्यक्तासक्त चेतसां अव्यक्ताहिगतिर्दुःखं देहवद्भि खाप्यतइति भगवयुक्तया केवल ज्ञानस्यास हायत्त्वदोषात्कामक्रोधा हंकारादीनां प्रतिपक्षित्त्वाच्च कदाचिन्नाशः स्यादेव भक्तेस्तुभग वदाश्रितत्वात्सोपाधिकत्वेपिन कामादिशत्रुभयं तेषामहं समुद्धर्तामृत्यु संसार सागरात्, भवामिनचिरात्पार्थमय्यावेशित चेतसामिति कृष्णोक्तयाभक्तानामेव निर्भयत्त्वमिति भावः। अत्रहि दृष्टांतः यथामणि प्रदीपयोस्तेजस्त्वाविशेषात्प्र काशकत्त्वाच्चसाम्यत्त्वे पिकाम क्रोधाहंकार तुलयवातज्जल संसर्गाज्ज्ञानदीपस्यैव नाशः। ननुभक्तितुल्यस्यमणे स्तस्मानैवाश्रितानांगुण दोषचिंतेति भावः ननु युष्माभिर्भक्तिविशिष्टं ज्ञानमेव मुक्ति साधनत्त्वेन प्रतिपादितं तर्हिन कर्मणान प्रज्ञयाधनेनत्यागेनैके अमृत्त त्त्वभान श्रुतित्यादि श्रुत्त्यासर्वत्यागस्यापि मोक्षसाधनत्त्वेन सूचितत्त्वात्किं मुख्यं साधनमथवाऽधि कारिभेदात्सर्वाण्यपि मुख्यमीत्यत आह एतदिति, एतत्सर्वंसत्कर्मादिशांत्य तं स्वानंदावाप्ति साधन भूतं भक्तिगम्यं भक्त्यैव प्राप्यं यतोभक्तिं विनासत्कर्मादौ प्रवृत्तिरेवनस्यात्तस्माद्भक्तिर्जनित्रीज्ञानस्यभक्ति र्मुक्तिविधायिनीति सदा शिवोक्तया साधन साध्ययोरपिभक्ति सापेक्षितत्वमेवसिद्धं अन्यदपिच सत्कर्मणोज्ञानोपसर्जनत्त्वाज्ज्ञानात्ध्यानं विशिष्यत इति कृष्णोक्तया च ज्ञानस्यापिध्यानोपसर्जनत्त्वात्ध्याने ध्यान स्यापि कर्मफल त्यागोपसर्जन त्त्वात्तस्यापिशांत्युपसर्जनत्त्वात्साशांति रप्यानंदावाप्ति प्रधानाऽ तः सर्वाणि साधनान्यधिकारि भेदान्मुख्यान्य प्यन्यसापे क्षितानिभक्ति योग स्त्वन्यनिरपेक्षितः। कुत इत्यपेक्षा याँ प्रमाणतामाह भवतोदाहृतः स्वामिन् भक्तियोगोऽन[२६] पेक्षितः, निरस्य सर्वतः संगंयेनत्त्वय्याविशेन्मन, इत्युद्धवोक्तयातथा पुरुषः सपरः पार्थभ क्तयालभ्य स्त्वनन्यया, समः सर्वेषु भूतेषुमद्भक्तिं लभते परां भक्तयामामभि जानातियावान्य श्चास्मितत्त्वतः यत्कर्म भिर्यत्त पसाज्ञानवैराग्यत श्चयत् योगेनदानधर्मेण श्रेयोभिरित रैरपि सर्वंममभक्ति योगेनमद्भक्तोलभतेंऽजसा नसाधयतिमांयोगोन सांख्य धर्म उद्धव नस्वाध्यास्त पस्त्यागोप यथा भक्तिर्मयोर्जिता भक्तयाह मेकया ग्राह्यः श्रद्धयात्माप्रियः सतां भक्तिः पुनातिमन्निष्ठाश्वपाकानपिसंभवात्। धर्मः सत्यदयोपेतो विद्या वा त पसान्विता मद्भक्तयाये तमात्मानंन सम्यक पुनातिहि। कथं विनारोमहर्षंद्रवता चेतसाविना विना नंदाश्रुकलया शुद्ध्ये द्भक्तयाविनाशय इत्यादि कृष्णोक्त्या चभक्ते रेवान्यनिरपेक्षितत्त्वं सर्वसाधन श्रेष्ठत्त्वं सर्वपुरुषार्थत्त्वं चप्रतिपादितं ननुकावाभक्तिः ही द्वक् स्वरुपायायोगज्ञान वैराग्ये स्वोप्यति रिच्यतेतत्राह सानन्येति न

---

(२६) ख मातृ कायाम भक्ति योगोऽनपेक्षित इतिपाठः।

(३०) ख मातृकायाम् तपस्त्यागो इतिपाठः (३०) खण्डन पूर्वकमितिपाठ

ंविद्यतेऽन्योभावोयस्यामित्यनन्या तत्र वयमेवशंकया विरुद्धमतो द्धारतत्खडन[३१] पूर्वकं वेदांतसिद्धांतोपपादनाद्वर्वभिप्रायेण भक्तावनन्यत्वं साधयामः। नविद्यते उपास्यत्त्वेनेश्वरादन्यः पदार्थोयस्मामिति वा नविद्यतेईश्वरादतिरिक्तः फ्लाभिसंधिरपियस्यापितिवा ने विद्यते उपासकत्वेन विद्यमानः स्वयमप्यन्योयस्यामि तिवायतः स्वस्यकर्तृत्त्वाद्यभावात्

**एतत्सर्वं भक्तिगम्यं सानन्येश्वर भावजा सानन्येश्वरभावजा।।**

तत्राद्ये सूर्योग्निर्ब्राह्मणोगावोवैष्णवः खंमरुज्जलं भूरात्मासर्वभूतानिभद्र पूजा पदानिय इति कृष्णोक्त्या पूज्यानामनेकत्वात्तकथ मन्योनास्तीतिवक्तुशक्यते।। ननु तत्रापि मे पूजापदानीत्युक्तत्वात्पूज्यत्त्वमंतर्यामिणीश्वर एवपर्यवसितं न तुनानापदपर्यवसायीत्यत आह निर्गुण स्येश्वरस्य गुणाश्रयं विनाप्रत्यक्ष पूजा ऽ संभवात्सरूपादीनामथवश्यं पूजास्थानत्त्वास्थान स्थानिनोर्भेदाच्च कथ मन्यो नास्तीतिवक्तुंशक्यते तथा च योन्योन्यस्मादेवतामुपासतेसदेवानां पशुरितिश्रुत्याभेदद्दृष्टे र्निपेधात्स्वस्याप्युपासकत्त्वेनोपास्य भिन्नत्त्वाच्चदोपद्वयं तावन्मामर्चयेद्देवं प्रति मादौस्व कर्मभिः यावत्सर्वेपु भूतेषु स्थितं चात्मनिनस्मरेत् यावन्नपश्येदखिलं पदात्मकं तावन्मदाराधनतत्परोभवेत्। शिवोभूत्वा शिवंजपेत् तन्मयः सन्प्रपूजयेदिति श्रीराम चंद्राद्युक्त्यापूजायाः सार्वाधत्व निरूपणादभेदभावनाया एवानन्यभक्ति फलितार्थत्वा दुपास्यभिन्नत्वेनभक्तेरन्यनिपेधकृतानन्यत्त्वमसंगत एवं द्वितीयेपिपक्षेफलमनु द्दिश्यनमंदोपि प्रवर्तत इति न्यायात्किंचित्फलेच्छां विनाभक्तौ प्रवृत्तिरेवनस्यादतोमध्ये फ्लाभिसंधित्वाद्भक्तेरनन्यत्त्वमसिद्धं नन्वस्मद्भक्ते रीश्वरप्रीतिरेवफलं तस्याः स्वभावेनैवबंधमोचक त्वात्पूर्णा नंदावाप्तिरस्मदिच्छांविनातत्प्रीत्यैवभवे त्तस्मान्नायं फला भिसंधि जनितो दोषइति चेत्तत्राह स्वसंपादितान्य प्रीतेरपि स्वप्रीति फलत्त्वादीश्वर प्रीतेरपितत्साधनत्वेनस्वस्यैवो पास्यत्त्वादीश्वरानन्यत्व मुपलब्धं एवं तृतीयेपि पक्षे ज्ञानदृष्टे विद्यिमानत्वेपि किंचि द्वैलक्षण्याद्भक्ते र्भिन्नतां वत्तुं पूर्वंज्ञानिल क्षणमाह शमादि साधन चतुष्टय संपन्ने मुमुक्षुः सन्कोहमितिमनसि विचार्य पश्चाद्गुरौः संकाशात्तत्व मेवासी तिवाकयार्थ ज्ञानमवगम्य सोहमिति स्वात्मानं ज्ञात्वो परमेत्स ज्ञानीच्युच्यते अतः परंभक्ते दुर्लभतां वक्तुं पूर्वंभक्तय् धिकरिणमाह यदृच्छयामत्कथादौ जात श्रद्धस्तुयः पुमान् ननिर्विणोनाति सक्तोभक्तियोगोस्य सिद्धिद इति भगवदुक्त्यान केवलं तत्त्वनिष्ठस्यविरागिणो नापि केवलं विषयिणो भक्तियोगः संभवति पुनर्यद्द च्छयेत्यनेन

(३१) ख मातृकायाम् योऽन्योन्यां देवतामुपासत इति पाठः

दुर्लभत्त्वं सूचितं पुनर्भक्तिज्ञानिनोः किंचिदं शस्साम्यं भक्तस्याधिक्यं वक्तुं पूर्वंज्ञानकृत साम्यमाह ईश्वरः सर्वभूतानां हृद्देशेर्जुन निष्ठति। अहंहिसर्वयज्ञा नां भोक्ताच प्रभुरेव च मनसावचसादृष्ट्यागृहयतेऽन्यैरपींप्रियैः अहंमेव नमत्तोन्यदितिवुद्ध्य वमंजसा बुद्धिर्ज्ञानमसंमोहः क्षमासत्यंदमः शमः सुखंदुः खंभवौ भावोभयं साम्यंकिचिदंशे चाभयमेवच अहिंसासमतानु ष्टिस्तपोदानं यशोयशः अर्वंतिभावाभूतानांमत्तएव पृथग्विधाः। नैवकिंचित्करोमी तियुक्तीमन्येततत्त्ववित् इत्यादि वाक्यार्थावलोचनेन भक्त ज्ञानिनो द्वितीयाभिनि वेशाभावेन भेदाद र्शित्त्वात्साम्य मेवतत्र यदंशेभक्त स्याधिक्यं तदाह अनेक ब्रह्मांडा नियस्यांत स्तिष्ठन्तियेन सेव्यसेवक नियामक नियम्य भावः स्वेच्छयोक्रीडार्थं स्वरुपे कल्पतस्तत्क्रीडा संपादनार्थं नियम्य सेवक रूपे भ्योयेभ्योनमन भजन पूजनादि कर्मकार यतितैः साकं स्वय मपि नियामक पूज्यलीला विग्रहं कृत्वा दर्शन संभाषण तत्काम परिपूरणा दिभिस्तन्मनोरथान्परि पूर्णे स्वकल्पित विद्यावरणं विद्या कुठारेणच्छित्त्वास्वरूपेणावस्थानं कारयति अतएव ज्ञात्त्वा तत्प्राप्तये मोक्षेच्छां दूरतः परित्यज्य तत्सेवनमेवाधिकं मन्यमानास्तन्नमनपूजन भजनादिभक्तिमेव कुर्वेति तस्यामायासा मावादित्यर्थः। अत्रदृष्टांतः यथा स्वबाहुतरणे न श्रांताः संतोजलेम ज्जंतस्ते यथा परतीरपारमिच्छंतितथानौकाश्रितास्तत्रापि गंगाजलक्रीड़ा रता दावाग्नितप्ता गजाइव सुखं प्राप्ता जलाद्वहिर्गमनं नेच्छंतितद्वद्भक्ति सुखं रसज्ञामोक्षेत्छांनैवकुर्वंतीत्यर्थः पुनर्यथाकश्चित्समुद्र द्वीपस्थ कपिलाख्यभगवद् दर्शन कामोगंगाश्रित नौकाधिष्ठित श्वरण चालनं विनापि व्याघ्रादिभ्यो निर्भयः सत्गंगा प्रवाहस्य समुद्रगामित्त्वा त्तत्रगत्वातत्रत्य हरिदर्शनेनकृतार्थः सन्पूर्णानंदी[३२] भवति तथैव सगुणलीलाश्रयभक्ति मार्गस्थितानामप्यधिष्ठान निर्गुण पर मानंदप्राप्तेखश्यं भावित्त्वाद्भक्तिमार्गस्थितो मोक्षमनिच्छन्नपिभगवत्प्रसादतः स्वरूपस्तत्त्रात्मसाक्षात्कारेण कृत कृत्योभवतीत्यतोनिच्छतामपि भक्तानां करकलितोमोक्षो भवतीति सिद्धः यतोयोगिनामपि सर्वेषां मद्मतेनांतरात्मनां श्रद्धावान्भजतेयो मांसमेयुक्ततमोमतइति भगवद्वचनात् ननुमुमुक्षूणां सहस्त्रेपुक चिन्मुच्येतसिद्धयतीति परीक्षिदुक्तेस्तथा बहूनां जन्मनांते ज्ञानवान्मां प्रपद्यतइति भगवदुक्तेः स्वमुक्तिमिच्छतामपि मध्ये कश्चिद्वहुजन्मभि स्तपसाज्ञानवान्समुच्यत इति मोक्षस्याति दुर्लभत्वं सूचितंतर्हिकथमुच्य तेऽनिच्छता मपिभक्तानां कर कलितो मोक्षो भवतीति तत्राह तैर्दर्शनीया वयंवेरुदार विलास हासेक्षितवामसूक्तैः हुतात्मनो ह्रुत प्राणांश्वभक्ति रनिच्छतो मेगति मएवी? प्रयुक्तं इति कपिलोक्तेरनिन्द्यतामपिभक्ता नामनायासेनमोक्षप्राप्तेः।

---

(३२) ख मातृ कायां पूर्णनन्दोभवति ''इतिपाठः''

किंतदिच्छयेतिभावः। पुनर्दृष्टांतः यथाक्रीडा सक्तस्यस्तनपानमनिच्छतोपितन्माता कृपालुतया स्तनपानं कारयत्येव तद्वदित्यर्थः पुनर्यः कश्चन क्षुधितोदरिद्रः क्षुच्छांत्यर्थं यतमानः प्रारब्धवशात्सुरसंप्रियमन्नं प्राप्यक्षुद्बोधमेवेच्छति नतुतृप्तिं यत स्तथाप्रियस्यान्नस्यदुर्लभत्वात् अत्रपुनर्वैधर्म्ये दृष्टांतः यथान्यः क्षुधितः, स्वानभीष्टंविरसमन्नं प्राप्य क्षुच्छांत्यातृप्ति मेवेच्छतिनतु क्षुतोधं तथा भक्तिसुख रसज्ञाः संसार तृप्तज्ञानिन एव मोक्षेच्छां नैवकुर्वंतियत एतादृशस्यभक्तिसुखस्य दुर्लभंत्त्वा दित्यर्थः कुतइत्यपेक्षायां प्रमाणेन निर्दिश ति मुक्तानामपिसिद्धानां नारायण परायणः सुदुर्लभः प्रशांतात्माकोटिष्विपि महामुने! यस्यास्ति भक्तिर्भगवत्य किंचनासर्वैगुणैस्त त्रसमासते सुराः हराभक्तस्य कुतेऽमह द्गुणामनोरथे नासतिधावतो बहिः। तेपांज्ञानी नित्ययुक्त एक भक्ति विंशिष्यते प्रियोहिज्ञानिनोत्यर्थमहंसचमम प्रियः। लाभोमद्भक्ति सत्तमइति परीक्षिच्छुक कृष्णोक्तिभिः केवलं ज्ञानादपिभक्ति युक्त स्यप्राधान्यादुत्तमलाभ प्राप्तेभक्त स्यैवं श्रैष्ठ्यं प्रतिपादितं। नन्वेवंभूता चेदनन्याभक्तिस्तत्त्व ज्ञानिनामपि दुर्लभा सा भेददर्शिनां प्राकृतानांकेन भावेनजाये ततत्राह ईश्वरभावजेति ईश्वर भावाज्जनिष्यत इत्यर्थः। सकीटक्भावइत्यपेक्षायामाह अन न्यभक्तेः पूर्वं सर्वनियामक ईश्वर स्तन्नियम्योहंतत्सेवक स्तेनैवप्रेरितः सन्तत्से वनं नाम स्मरणादिकंक रोमितत्रमत्कर्तृत्वादिभावंस एवेश्वरः स्वकृपयाना शयित्वामामंगीकरोत्वेनमीश्वर विपयोंतः करण धर्म एवैश्वरोभावस्तस्माद नन्याभक्तिः सर्वेषामपि तत्प्रसादाज्जनिष्यत इत्यर्थः। नन्वेता दृगैश्वरभावेन भक्तिजायते तत्तुसत्यं परंतुसभावः किं साधन साध्येश्वर स्तत्राह नामसाध्येश्वर इति। नाम्नैव नाम ज्ञानेनैव साध्यः साधयितुं स्वीयत्वेन कर्त्तुयोग्य ईश्वरोयस्मिन् स इति पुनः किं साध्य श्चेत्यपेक्षायां राजदंतादिषु परमितिसूत्रात्तत्पद स्यैवसमासव्यत्ययेन व्याख्यास्ये ईश्वरस्य नाम्नैवसाध्यो नामसाद्धयेश्वर इति ननु दर्शनस्पर्शन प्रमु पूजास्तुत्यभिवंदनैरित्यादि भिर्भगवद्भावोभवतीति प्रसिद्धंक थं केवल नाम ज्ञाने नैवेत्युच्यते तत्राहसत्यं तथापि नाम ज्ञानं विनानामवतः प्रीतिरेवनसंभवतितदभावे सति दर्शनार्चना दिक्रियैवन घटेत यथा शूरभक्त राजे श्वराणांशौर्य भक्ति लोक रंजन भक्तवात्सल्यादि गौणनाम्नां ज्ञानाभावेसतितेषुशूरादिषुनिकटवर्तिष्व पिभावः संभवितुंनार्ह तितस्माद्गुणकृतनाम्नां ज्ञान साध्य–

**नाम साध्येश्वरोभावस्तन्नाम गुरुभक्तिः।।३२।।**

एवैश्वरोभावइत्यभिप्रायः ननुतीर्थसेवन तप आदिभिः क्षीण पापाना मेवात्मबोध श्रवणेधिकारः अस्मिन्नाम्नि स्तुतेन सुरापो मित्रध्रुक ब्रह्महागुरुतलपगः स्त्रीराजपितृगोहं

तायं चपातकिनो परे, सर्वेपामप्यघवता मिदमेवसुनिष्कृतं नामव्याहरणं विष्णोर्य तस्तद्वि पयामतिः, सांकेत्यं पारिहास्यं वास्तोभहेलनमेववा बैकुण्ठनाम ग्रहणमशोपाध हरंविदुः। सकृदुच्चरितं ये न हरिरित्यक्षरद्वयं बद्धः परिकरस्तेन मोक्षायगमनं प्रति। कृते यत्ध्यायतो विष्णुस्त्रेतायां यजतोमखैः द्वापरेपरिचर्यायांकलौ तद्ध रिकीर्तनात्। हरेर्नामैवनामैवनामैवम मजीवनं कलौनास्त्येवनास्त्येवनास्ते वगतिरन्यथा। नामस्मरणादन्योपायं नहि पश्यामो भवतरणीयमित्ति श्रीशुकशंकरादिभिः सर्वध्यानादिसा धनेभ्यः श्रेष्ठत्त्वेन स्तूय मानेसति नाम्नि कर्ण रोचनै हिकामुष्मिक फ्ल भोगासक्तानां मत एव प्रवृत्तकर्मभरा क्रांतानामतिसुलभत्वान्नित्यसुखप्रद त्वाच्च कथं प्रीतिर्नसंभवति तत्राह तन्नामेति तन्नाम प्राप्तिः गुरुभक्तित इति गुरुणा कृताशिष्येया भक्ति; स्वकीयत्वेन प्रीति स्तयानाम प्राप्यत इत्यर्थः। तस्मात्तेपां प्रवृत्तकर्माभिनिवेशिनामत एव मुमुक्षुत्वाभावात्सद्गुरौशरंण भजतां गुरु प्रीत्यभावान्नाम प्राप्तिर्न संभवती त्यर्थः। ननु श्री गुरौ शिष्य कृताभक्ति र्वक्तव्या कथमुच्यते शिष्ये गुरुणा कृतेति यथाकल्प वृक्ष समीपस्थोयद्यत्फलं वांच्छतितत्त देवा प्रोति तथैवात्रकिं गुरु प्रीत्यापुनर्येयथा मां प्रपद्यं ते तां स्तथैवभजाम्यहमिति भगवद्वचनात् तत्राह यतः कल्पत रित्छितप्रदत्त्वेपिसदसत्सं कल्पजनकत्वंनास्ति गुरौतुयमैवैप वृणुते तेनलभ्य इति।

एष एव साधुकर्म कारयतितं यमेम्योलोकेभ्ये उन्निनीपाते, एष एवासाधुकर्मकारयतितं यमेश्योलोकेश्योधोनि नीपत इत्यादिश्रुत्यातथा ज्ञायमानं हि पुरुषं यं पश्येन्मधुसूदनः सात्विक स्तुसविज्ञेयो भवेन्मोक्षे चनिश्चितः, नारायणेन दृष्टश्चप्रतिबुद्धो भवेत्पुमान् एवमात्मेच्छया राजन्प्रति बुद्धोनजायत इति स्मृत्या च सदसत्संकल्पजनक कत्त्वा कल्प तरु साम्यं गुरौनयुक्तं येयथा मां प्रपद्यंतेतां स्तथैव जाम्य हमिति वाक्या त्राकृतानात्तं त्तत्तनु भजतामपितत्तद्वासनानुसारेण कामप्रदत्त्वंसूचितं तथाप्यग्रे अंतवत्तु फलं तेपांतद्भ वत्त्यल्प मेधसामिति दोपत्त्वेनोपसंहृतं तस्मान्नाम प्राप्तिर्गुरुकृपयैवस्ववासनाऽ किंचित्करे तिभावः। आत्मैवतदिदं विश्वं सृज्यते सृजतिप्रभुः त्रायतेत्राति विश्वात्मा हिय तेहरतीश्वरइति कृष्णोक्त्या कार्यकरण कर्तृणां पृथत्क्वेनान व स्थानात्। ननुगुरावपि सदसत्संकल्प जनकत्वा द्वैपम्यंत दवस्थ मेवतत्राह सत्त्यं परंतुयदासिसृक्षुः पुर आत्मनः परोरजः सृजत्येपपृ थक्स्वमायया, सत्त्वं विचित्रासुरिरिं सुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ जयकाले तुसत्त्वस्य देवर्षीन्रज सोऽसुरान् तमसोयक्षरक्षांसि तत्कालानुगुणोभजत् अहं सर्वस्यजगतः प्रभवः प्रलयस्तथेत्यादि श्री नारद भगवदाद्युक्तयासाम्यंत्यागं बिनाविपमसृष्टिर्नस्या देवपुनरपिभगवतः। सर्व साम्यत्वेपि विपमभाव प्रदर्शनंतु वैरभावेन भजतामपि सन्मार्ग

प्रापकं पितुः पुत्र शिक्षणमिवातोननैघृण्या शंकेतिभावः। अतोभगवान्सर्वमत विलक्षणोपिसम विषममतीनां मनुसर तियथार ज्जुखंडः सर्पमालादि धियाँ नन्विदं सृष्टयादि कर्तृत्त्वादीश्वरे संभवति कथमकिंचित्करेनराकारे गुरौ साम्यत्यागा द्युत्त्यते त्तत्राह एथवैभगवान्त्साक्षात्प्रधान पुरुपेश्वरः योगेश्वरैर्वि मृग्यां घ्रिर्लोकोवैमन्य ते नर मिति नारदनिर्णयात्सर्वेषां सृष्टयादिक र्तृत्त्वात्स्वातं त्र्येण प्रतीयमानानामप्येषो गुरुरेव नियामकः प्राकृतलोकस्तु गुरुस्वरुपानभिज्ञ स्तंनरं मन्यंते नतुत्तत्व इत्यलमतिविस्तरेणेत्येषा दिक्।।३२।।

**इतिश्रुत्वागुरोर्वाक्यं शिष्यः प्रीतमनास्तदा।।**
**तूष्णीं भावं समापन्नः पुनर्नोवाच किंचन।।३३।।**

एवं श्री सद्गुरुवाक्यं वैराग्यज्ञान मुक्तिभ्योपि भक्तेराधिक्यबोधकं श्रुत्वा सच्छिष्यस्तदैव प्रसन्नांतःकरणः सन्परमानंद जलधौनिमग्नः सशिरः कंपरोमांचित तनुस्तूष्णीं भावमापन्नः पुनः किंचिदपि वक्तंन समर्थोबभूव वक्तुमित्युपलक्षणयतो निमिषोन्नमेष व्यापारस्याप्य संभवात्कुतः पुनर्वृत्तिव्याप्तिरितिभावः।।३३।।

अस्मिन्ग्रंथे श्रीगुरुकृपाकटाक्ष सूचित बहुदृष्टांत सत्प्रेमे फलेस्वेनाभि निवेशेन कुत्रचिदाहेति कुत्रचित् दुरुक्तिं विनापि व्याख्यास्य इतिचोक्तं तत्रमूलटीकयो नमिद्वयवतएकस्यै वकर्तृत्वादयं दोष इति सार ग्राहिभिः शिष्टैर्न मंतव्योय त उभयत्रापि सत्प्रमेयस्य निखद्यत्वादिति भावः कृष्णोहं पश्य तगतिंललिता मितितन्मनाइतिवदभेदभावनया स्त्रीपुपुल्लिंग प्रयोगो न दोषायत द्वदत्रापीत्यर्थः।।

इतिश्रीदिनकर दुर्गासुतजगन्नाथविरचित श्री गुरुशिष्य संवादोन्मत सिद्धांत रहस्य पूर्वार्द्धः समाप्तः।। श्री कृष्णार्पण मस्तु।।

**सुदामोपनाम्नासदाशिवभट्टसूनुभगवं तेन द्रव्य द्वारा संपादितं।।**
**स्वार्थं परार्थं च ।।शुभंभवतु।।**

## ।। सिद्धान्तरहस्यम् ।। पूर्वार्धभागः

## ।। कारिकापाठपूर्वार्धस्य ।।

अथकवि वाक्यम्–

चिन्मात्रमेकं परिपूर्णमाद्यं प्रकाशरूपं सदसद्विमुक्तम्।
मायेक्षणेनैव जगद्विलासंश्रीविट्ठलं सद्गुरुमानतोऽस्मि।।

सद्गुरुरुवाच–

ज्ञातं ब्रह्म त्वयावत्स सूक्ष्मबुद्ध्या विनिश्चितम्
सर्व प्रकाशकं सर्व कारणं निरपेक्षकम्।।२।।
पुनः कीदृक् प्रत्यक् प्रति शरीरमंतर्यामि प्रत्यक्
प्रमातृरूपं यत्सर्वानुस्यूतमद्वयं अंतर्दृष्ट्या सर्वद्वन्द्व दृष्टं किं वाथवानहि।।३।।

शिष्य उवाच–

ज्ञातृ भावे कथं ज्ञेयं ज्ञानाविषयलक्षणात्।
वृत्त्यभावे कथं ब्रह्म बृंहकत्वोपपादनात्।।४।।

सर्व प्रकाश्याभावत्वात्कथं सर्व प्रकाशकम्।
कार्याभावे कथंसर्व कारणं भवतां मतम्।।५।।

सो कामयत श्रुत्यातु कथं तन्निरपेक्षकम्।
परागभावात्प्रत्यक्त्वं कथं संगच्छते पुनः।।६।।

प्रमेयस्यानिरुप्यत्वात् कथं तस्य प्रमातृता।
व्यक्ताभावात् कथंतद्धि तदनुस्यूतमुच्यते।।७।।

सजातीयादि हीनं चेदद्वयत्वं कथं पुनः।

अतन्निरसने ज्ञानं कल्पितं प्रतियोगिनः।।८।।

दृष्टेरंतस्त्ववाह्यत्वे सर्व दैवविनिश्चिते।
तस्याः प्रवर्तकं द्रष्ट्रकथं दृश्यंतयाभवेत्।।६।।

नित्य प्राप्तस्य याप्राप्तिरुपचारस्तु केवलम्।
तस्य प्राप्तौ च यःप्रश्नो वागारम्मण मेवतत्।।१०।।

दृश्यतेऽवग्रया बुध्या बुद्धि ग्राह्यमतीन्द्रियम्।
इति शास्त्रविरोधोऽभूदतीन्द्रिय विशेषणात्।।११।।

अतीन्द्रियं कथन्त्वेद्बुद्धि ग्राह्यं कथं पुनः
एतन्मे संशयं छिन्धि शास्त्र भेदभवं गुरो!।।१२।।

सद्गुरुरुवाच—

किञ्चिद्वैशिष्ट्यमाश्रित्य मया प्रश्नः कृतस्त्वयि।
त्वदुत्तरञ्च विज्ञातुं तव ज्ञानं परीक्षितुम्।।१३।।

मद्वाक्य प्रतिवाक्येन त्वयाचसंतुष्टोऽस्यहम्।
शास्त्रजं संशयं पृच्छेस्तं छेद्मि तव पुत्रक।।१४।।

ज्ञातृ भावादि यच्चोक्तं त्वयातत्सत्यमेवहि।
अध्यस्थस्यापवादार्थं वैलक्षक्ष्यं निरूपितं।।१५।।

सो कामयत् श्रुत्यावा अन्यः कर्तानिपेधितः।
सर्वं ब्रह्मेति श्रुत्या निपेधिते कार्यकारणे।।१६।।

यदा दृश्ये वस्तुबुद्धिः सैव सूक्ष्मतया मता।
तया विनिश्चितं यद्वै बुद्धिग्राह्यं तदैव तत्।।१७।।

यदविस्मृत्यदृश्यं वैस्वरूपेण व्यवस्थितिः।
तदैवातीन्द्रियं ज्ञेयमुभयोरेष निश्चयः।।१८।।

ज्ञातं ब्रह्मत्वया प्रश्ने यदुत्तरमनुत्तरं।
त्वया प्रज्ञाभिमानेन वचसाप्रत्युदीरितम्।।१६।।

सत्यमद्वैतमित्युक्ते खंड्यते द्वैत वादिना।
अद्वैतञ्चेत्कथंब्रूष इति मौनं सदाभ्यसेत्।।२०।।

वाचादितं मनोध्यातमुभयं स्वप्न संस्तुतम्।
तयोर्भोगावसाने तु प्रबोधेलीयते क्षणात्।।२१।।

नारायणेति ब्रह्मेति परमात्मेति गच्छते।
प्रकृत्या प्रत्ययो भिन्न केशवानन्द आश्रयः।।२२।।

बुद्ध्यासमेत्य विषयी विरागी तदनादरात्।
आदरानादरौत्यक्त्वा बोध रूपः स्वयं भवेत्।।२३।।

विचिंत्य समतापूर्वं वाच्यवाचकतां गतः।
जिज्ञासितमधीतं च त्यक्तोदास्ते तदोभयं।।२४।।

बाधिते स्वनुवृत्तिर्नो यावन्मनसि लीयते।
सैनमाकर्षते तावत्स्वरूपाच्च्यावितुं वलात्।।२५।।

तत्त्वमस्यादिवाक्यार्थं ज्ञानात्प्राप्त इवेयते।
तथापि प्राप्यते नैव संकल्पोपशमं विना।।२६।।

मम प्रश्नं निराकर्तुं त्वयाप्रज्ञाभिमानसः।
प्रत्युक्तः शास्त्र सिद्धान्त इत्येपापूर्णता तव।।२७।।

गुरोर्लोपो न कर्तव्यो ब्रह्मिष्ठेनापि सर्वशः।
गुरुशिष्य प्रचारार्थं किञ्चिदुक्तं मयोत्तरं।।२८।।

अहं भावमनापन्नः कर्तानैव स उच्यते।
न चास्येहाभवो वाधस्तेन प्रश्ने कृते कृते।।२९।।

संकल्प जाल मुच्छिद्य विंवभूतः स्वयं तदा।
परमात्माविभुस्साक्षादंतः स्फुरति निर्मले।।३०।।

संकल्पहानौ ते शक्तिः नास्ति चेन्मास्तु मानसे।
आश्रय व्याप्यतां ध्यात्वा निर्भयत्वं प्रपद्यसे।।३१।।

एतत्सर्वं भक्ति गम्यं सानन्येश्वर भावजा।
नाम साध्येश्वरोभावस्तन्नाम गुरु भक्तितः।।३२।।

इति श्रुत्वा गुरोर्वाक्यं शिष्यः प्रीत मनास्तदा।
तूष्णीं भावं समापन्नः पुनर्नोवाच किञ्चिन।।३३।।

इति श्री दिनकर दुर्गासुत जगन्नाथ विरचित गुरु
शिष्य संवादोन्मत सिद्धान्त रहस्यपूर्वार्धे कर्गार का पाठः पूर्णः।।

# उत्तरार्द्ध

(१)

श्रीतीर्थामृतवाक् समेतवयुनाच्छात्राः परेभक्तिजां।
सख्युर्वीक्ष्य परात्मप्राप्तिमतुलां प्रष्टुं पुनः सादराः।।१।।

श्रीगणेशाय नमः ।। श्री गुरुचरणाभ्यांनमः।। अथेदानीं सिद्धांतरहस्योत्तरार्धे श्रीसद्गुरुस्तत्वज्ञानाधिकारिणः परान्शिष्यान्मुमुक्षूनपि नानाविमत वाक्य श्रवण संदिग्ध चेतसस्तान्निःसंशयितुं तैः पृष्टः सम्प्रवृत्तशास्त्राधिकारिणां तत्तन्मतमनूद्यनिवृत्त कर्माधिकार्युपयोगित्वेन त्रिविधाधिकार भेदात्पूर्वापरवाक्याविरोधेन श्रीराम कृष्ण व्यासशुक शंकराचार्याष्टावक्रहस्ता मलक श्रीधरस्वामी संमत श्रुति स्मृतिपुराण सिद्धांत मर्वाचीन प्राकृत पथाभिनिवेशेन तत्रदेवता प्राधान्यकलहाभिरतानां सर्वाधिष्ठान मजानतांस्वस्वमतिकल्पित पथोनिषिध्य निरुपयति शिष्यैः कथं पृष्टइत्यपेक्षायां पूर्वमर्धश्लोकेन कविराह।। श्री तीर्थेति श्री तीर्थं श्रियायुक्तोगुरुः कुतो निपाता[१] गमयोस्तीर्थ मृपिजुष्टे जले गुरौइतिवचनात् ननु श्री साहित्यं विष्णावेव प्रसिद्धं कथं निष्किंचने कौपीनधारिणि गुरौभवती त्यत आह ऋचोयजूंषिसामानिसाहि श्री रमृता सतां इति श्रुत्या शाब्दे परे च निष्णाते गुरावमृत रुप श्री साहित्यं छायेव नित्य मस्तीतिभावः तस्यगुरोरुक्तता वाक् मोक्ष प्रापिका वाणीतस्यां श्रवणंतस्याः समकाल मेवेत वयुना प्राप्त ज्ञानाः छात्राः पूर्वशिष्यानुयायिनः स्वेपुज्येष्ठस्यसख्यः परात्मप्राप्तिमुत्कृष्टात्मला-भंवीक्ष्य बाह्य पुलकोद्गमादिना ज्ञात्वा कथं भूतांतत्प्राप्तिमलुलां निरुपमांपुनः कथंभूतां भक्तिजांशक्ति श्रवण सहजां एतत्प्राप्तेरतिसुलभात्काल लोकः किमर्थंनयत त इति विस्मयं कुर्वतः श्री सद्गुरुंपुनः प्रष्टुं सादरा आदर सहिता जाता इति शेषः। आदर मेवदर्श यतिभो भोइत्यादरेवीप्सा भो स्वामिन्नयंजीवोजीवत्वावछिन्नः सर्वेपिजीवा इत्यर्थः। जाता वेक वचनं भोभो ब्रह्म समाधिनाप्यसुलभं सौख्यं परंविंदते जीव श्चेदयनायकिं नय ततेछिंध्यत्रनः संशयवचनं एवं परं सर्वोत्कृष्टं कैवल्याख्यमनायासेन विंदतेप्राप्नोति चेत्तर्हि अयनाय मोक्षाय मोक्षं प्राप्तुं किमर्थं नयतेयत्नं न करोतीत्यत्रास्मिन्विषयेनो ऽस्मा कमुत्पन्नं संशयंतं च्छिंधिच्छेदय कथं भूतं सौख्यं ब्रह्म समाधिनाप्यसुलभं ब्रह्मणियः समाधि श्चित्तैकाग्र्यं तेनाप्य सुलभं दुर्लभ मित्यर्थः।।१।।

सद्गुरुरुवाच।।

**शास्त्राज्ञानंकुतर्कनष्ट मतयः प्रायः परान्वंचका।**

**अर्थानर्थकरानरा नट विधंवेषं विधायाश्रितान्।।२।।**

**सद्गुरुवाच–** इह लोके प्रायशः परवंचकाः साधुवेषमात्र धारिणः शिष्यवित्तजीवितेप्सवः उभय[१३] व्रह्मनिष्णाता अतएवतत्वज्ञानोपदेशानाधिका रिणोप्युपदेशकराः संतः प्रचरंतितत्संगादयं देहाभिमानीकथं मुक्तौयतिष्यतेइत्यभि प्रायेणोत्तर माह शास्त्राज्ञानेति-शास्त्र ज्ञानं शास्त्रानवबोधस्तेन यः कुतर्कोवीपरीतार्थावलोचनं तेन नष्ट मतयो भ्रष्ट विवेका अतएव अर्थानर्थ करायथार्थं हित्वा अन्यथाव्याख्यानपरास्त द्यथा सदेवसौम्ये।

**तत्संगादविधिविधिं समनुते भेदंभयञ्चाश्रितः**

**संसिद्धौयतते कथंपुनर सौ जीवः परावृत्तिमान्।।२।। श्रीराम**

अहमेवास दमग्रासीदिति श्रुतेरर्थं इदं विश्वं सृष्टिः पूर्वसद्रूपमेव आसीन्नत्वमसद्रूपमिति त्रिकाल सत्यत्त्वदृश्यत्वादि धर्मकेविश्वस्मिन्नेव प्रतिपादयंति परंतु आत्मा वाइदमेक एवाग्र आसीन्नान्यत्किंचन मिषतनयत्पुरस्तादुत यन्नपश्चानमध्येचतन्नव्यपदेशमात्रं यथानभ सिमेधौ रेणुर्वापार्थिवोनिले एवं द्रष्टरिदृश्यत्वमारोपितमबुद्धिभिरित्यादि श्रुति स्मृति पुराणै स्त्रिकाल बाधित्वादसत्वं प्रतिपादितं तन्मतमनवगाह्य कथं तेपुनरज्ञान संज्ञौभवबंध मोक्षौ द्वौ नाम नान्यौस्त ऋतज्ञ भावादित्त्यादिषुभवबंध मोक्षयोरज्ञान संज्ञत्वा देतौ ऋत ज्ञभावाद न्यौ नस्तइमं यथार्थं विहाय तथा बद्धोमुक्त इति व्याख्यागुणतोमेनवस्तुतः गुण स्यमायामूलत्वान्नमेमोक्षोनबंधन मितिभगवद्वचनं च विस्मृत्य अज्ञान श्वसंज्ञश्चज्ञान संज्ञावित्याग्रहेण भवबंध मोक्षयोरज्ञानसंज्ञत्वेन सत्यत्वं प्रतिपादयंतियद्धा अर्थार्थ संपादनार्थं स्तेयं हिंसाऽनृतं दंभः कामः क्रोधः स्मयोमदः।। भेदोवैरमविश्वासः संस्पर्द्धाव्यसनानिचेत्येतान्पंचदशा नर्थानपि कुर्वंतीत्यर्थः। पुनः कथंभूतानराः नट विधं वेषं विधायनट सदृशं वाह्य साधुवेषं कृत्वा आश्रितान्गुरुत्वेन शरणागतान्परानन्प्राणिनो वंचका वंचन पराः प्रायशोलोके पर्यटंतीतिशेषः। तत्संगादसौजीवः स्वयं पराग्वृत्तिमान्बाह्य दृष्टिः भेद द्वैताभिनिवेश द्वितीया द्वैभयं भवति इति श्रुतेर्भयं चाश्रितः सन्नविधिंवेदैर प्राति पादित मपितत्कालक्षुद्र फलदमंते नरक प्रापकं वाम मार्गादिकं विधि विधि सदृशमवश्यकर्तव्यतांमनुते स एवं भूतोदुःख संगादाहतमतिः संसिद्धौमुक्तौ कथंयतते यत्नं करोति नकरोतीत्यर्थः।।२।।

श्रृणुध्वं पुत्रकायूयं नानामत विमोहिताः।।

श्रेयोवदंत्यनैकां तंयथामति यथारूचि।।३।।

अथ शिष्य संदेह निरासार्थं श्रीसद्गुरुः परिछिन्नदृष्टीनां तत्तन्मति विलसितपृथत्क्वोपासनां तत्तन्मतमनूद्यपृथत्क्वंच निषिध्य सिद्धां प्रतिपादित्सुः शिष्यान्प्रीत्या संबोध्याह श्रुणुध्वमिति हे पुत्र का यूयं श्रृणुध्वंमद्वच इतिशेषः इमे लोकाः नानामत विमोहिता अनेक संप्रदाय निवेशेन मोहं प्राप्ताः संत अनेकांत मनेक पर्यवसायि श्रेयः श्रेयः साधनंवदंतितदपि व्यासादिसंप्रदायानुरोधेन। किंतुयथामति स्वमति मनतिक्रम्ययथा रूचिस्वरूच्यनुसारेणेत्यर्थः तत्र व्यासादीनां भागवत प्रतिपादितंश्रेयः सिद्धांत माह एतावन सांख्य योगाभ्यां स्वधर्म परिनिष्ठया जन्म लाभः परं पुंसामंते नारायण स्मृतिः।

एतावानेवमनुजैः योगनैपुण्य बुद्धिभिः स्वार्थः सर्वात्मना ज्ञेयोयत्परात्मैकदर्शनं एतावान्सर्ववेदार्थः शब्द आस्थायमांभिदां मायात्रयमनूद्यांते प्रतिपिध्य प्रसाध्यति एतावानेव यजतामिह निःश्रेयसोदयः भगवत्यचलो भावोयद्भगभवतसंगतः एतावानेवलोकेस्मिन्पुंसा निःश्रेयसोदयः तीव्रेणभक्तियोगेनमनोमप्य र्पितंस्थिरं एतावानेवलोके अस्मिन्पुंसः स्वार्थः परः स्मृतः। एकांत भक्ति र्गोविंदेयत्सर्वत्र तदीक्षणं एवं वेदेति हास पुराणार्थनभिज्ञाः सर्व सिद्धांत बहिष्कृत द्वैताभि निवेशादनैकांतं श्रेयो वदंतीव्यर्थः।।३।।

शक्तिः शक्तिं परांमत्वाशिवंशैवः परोहरिं।

सूर्यं सौरोगाणपत्योमत्वागणपतिं परं[४]।।४।।

किं मत्वा अनैकांत श्रेयो वदंती त्यपेक्षायामाह ''शक्तएव शाक्तः शक्त्यु पासतः शक्तिमेव परामुत्कृष्टांमत्त्वा तत्सेवन नमनादिक मेव परं श्रेय साधन मिति निश्चित्य सत्प्रमाण मप्यनुवदति या ब्रह्मा च्युत-शंकर प्रभृति भिर्देवैः सदावंदितेति पुनः शिष्टाचार मपि दर्शयति रुक्मिणी गोपकुमारिकाया दैवाद्यै र्वैष्णैर्वेदिता ध्याता च नमस्ये त्वादिके भीक्ष्णं स्व संतानयुतां शिवां।। भूयात्पतिर्मे भगवान् कृष्ण स्तदनु मोदतां।। भद्र कालीं समानर्चु र्भूयान्नंद सुतः पतिः उपतस्थुर्महामायां दुर्गाकृष्णोपलब्धये'' तेषां च देव्युपस्थाना त्प्रत्यादिष्टाशिषा सह'' प्रादुर्ब भूवसिद्धार्थः सदारोहर्षयन्हरिः'' एवं कुरुक्षेत्रे युद्धारंभे श्री कृष्णोपदेशेन शत्रु पराजयार्थं दुर्गास्तुति रर्जुनेन कृता। तदाशिषः प्राप्ता अतः श्रीकृष्ण प्राप्तिः शत्रु पराजयादिकं च यस्याः प्रासादज मत्तोनामरुपे भगव नीति वचनात् तदंगीकारं विना अवतार चरित्र मपि न घटेत् यतः कार्य कारण कर्तृत्वे प्रकृते रेव

कारणत्वा त्तथा हनुमंतं प्रति तत्व ज्ञानोपदेशे सीता वाक्यं ''मां विद्धि मूल प्रकृतिं सर्ग स्थित्यंत कारिणीं'' तस्य सं निधिमात्रेण सृजामीदमतं द्रिता।। एवमादी निकर्माणि मयैवाचरितान्यपि। आरोपयति रामे स्मिन्निर्विकारेऽखिलात्मनि'' एवमादीनीत्यनेन लोके श्रीराम चरित त्वेन प्रसिद्धानि ताटवधादीनि कर्माण्यपि सीताकृता नीति भावः। पुनरनादित्त्व प्रतिपादनाच्च सर्वेषां मूल भूता प्रकृति रेवं तस्मात्सर्वोपास्यत्वे न सैव सेव्येति तद्भक्ताभि प्रायः''। एवमेव शैवः शिवः ''श्रेष्ठत्वे प्रमाणं वदति'' ईशानः सर्व विद्यानामीश्वरः सर्व भूतानां ब्रह्माधि पति ब्रह्मणोधि पति ब्रह्मपति रित्या दिश्रुत्त्या पुन र्देव कृतां रुद्र स्तुति माह।। त्वमेव सर्वजगतो ईश्वरोबंध मोक्षयोः तेत्वा मर्चंति कुशलां प्रपन्ना र्तिहरं गुरु त्वं ब्रह्म परमं गुह्यं सद्भावनः परनाना शक्ति विराभातात्वमात्मा जगदीश्वरः।। न ते गिरित्रा खिललोकपाल विरंचि वैकुंठ सुरेंद्र गम्यं ज्योतिः परं यत्र रजस्तम श्वसत्वन्न, यत् ब्रह्म निरस्त भेदम् महेशान्न परोदेवो इत्यादि वाक्यैः पुनः श्रीकृष्णेना पि पुत्र प्राप्तये।।

मंदराचले गरुडेन सहगत्वा पंचाग्नि साधन पूर्वकं शिव प्रीति मुद्दिश्य तप स्तप्तं ततः शिव प्रसादात् प्रद्युम्नं लब्धवान्।। तथा जयद्रथवधे श्वः सूर्यास्तात्प्राग् जयद्रथं हनिष्यामीत्यर्जुनेन प्रतिज्ञाते सति तद्रात्रावे वतत्प्रतिज्ञा सिध्यर्थं अर्जुनेन सहितः श्रीकृष्णः शिवतुष्टयर्थं होमं स्तुत्यादिकं कृतवान्'' तेन च रात्रावर्जुनस्य स्वप्ने प्रसन्नः शिवः शत्रु वधार्थ पाशुपतमस्त्रं दत्त वानेव मर्जुन जयो पि कृष्ण द्वारा शिव प्रसाद ज एवेति भावः। एवं विष्णु रपि शिव पूजायां नियमित कमल सहस्त्र मेकोनं ज्ञात्वाततपूर्त ये स्वप्ने स कमल मुत्कृत्यार्पितवान् ततः तत्प्रसादात्सुदर्शनं त्रिभुवनेषु न सामर्थं प्राप्तवान्।। अतः सर्वैः शिव एवोपास्य इति भावः। एवं परो वैष्णवोपि विष्णु मेव सर्व देवता नियामक कमीश्वरं मत्वा तस्य सर्वोत्तम त्वे श्रुति स्मृति पुराण संमत मनुवदति विष्णोर्नुकं वीर्याणि प्रवोच मित्यादि सूक्तैस्तथा अग्नि र्वैदेवानामवमोविष्णुः परमः स्तदं तरेण सर्वा अन्यादेवता इति'' अनादि निधनं विष्णु सर्वलोक महेश्वरं ''लोकाध्यक्ष स्तुवं नित्यं सर्वदुःखातिगो भवेत्। वासुदेव परावेदा वासुदेव परामखाः।। वासुदेव परादेवावासु देवपराक्रियाः।। वासुदेव परंज्ञानं वासुदेवं पर तपः।। वासुदेवपरो धर्मोवासुदेव परागतिः।। वेदे रामायणे चैव पुराणे भारते तथा ''आदावंते च मध्ये च हरिः सर्वत्र गीयते।। इति श्रुति स्मृतिपुराण संमते न ब्रह्म रूद्रेन्द्रादि सेव्यत्वा द्विष्णुरेव सर्वोत्तमत्वेनसर्वसेव्य इतरे तदधीनास्तत्सेवका इति भावः।। तथा सौरः सूर्यभक्तः सूर्यमेव परंमत्वा तन्न मनादिक मेव परं श्रेयः साधनं च मत्वा तत्र श्रुत्या दि प्रमाणेन दृढी करोति।। आकृष्णेनरजसा वर्तमान इति'' सूर्य आत्मा जगतस्तस्थुभश्वेति।। प्रत्यक्षं

सूर्यमभिवदति।। मृतेडंड एष एत स्मिन्पद भूत्ततो मार्तड इति व्यपदेशः।। हिरण्यगर्भ इति हिरण्यांड समुद्भवः।। तथागायत्री प्रतिपाद्य दैवतत्त्वात् ब्राह्मणादि त्रिवर्णानां मुख्योपास्यत्वात्कालात्मा भगवान् सूर्य एव बुद्धि प्रवर्तक त्वाच्च सर्वदा सर्वैः सेव्यइति सौर मतं।। एवं गाणपत्यो गणेश भक्तो[८] इति गणेशमेव मंगल मूर्ति मत्वा सर्वादि पूज्यत्वात् सर्व विद्या निधित्वाच्च तत्सेवन मेवाधिकं मन्यमानः स्मैस्तस्य सर्वोपास्यत्वे श्रुत्यादि प्रमाणं निर्दिशति।। गणानांत्वा गणपति हवामह इत्यादि सूक्तैः अभिप्सितार्थ सिध्यर्थ पूजितोयः सुरासुरैः सर्व विघ्न हर स्तस्मै गणाधि पतयेनमः।। जेतुंयस्त्रिपुरं हरेण हरिणेत्या दिना हर हरि कमला सनशेष पार्वती सिद्ध पंच शरादिभिः स्वस्व कार्य सिध्यर्तं नागाननएवध्यातः अतः सर्वोपास्य त्वं गणपते रेव सिद्धं अतस्तद्भक्ता स्तत्सेवेन मेव सर्वसाधन श्रेष्ठं मत्वातमे व सेवत इत्यर्तः।। एवं पंच देवता भक्तो आदि तत्तदेवता प्राधान्यं वंदंतः परस्परं कलहाभि रताः संतोयथामति यथारुचि च अनेकांतं स्वस्वमति कल्पिपत सिद्धांत पर्यवसायि श्रेयो वदंतीति पूर्व श्लोकस्य क्रिया पदेनान्वयः।।४।।

**सर्वेप्येते तनुंभक्ता अव्यक्तेव्यक्त बुद्धयः।**

**अजानंतोतरात्मानमंत वत्फल भागिनः।।५।।**

एवं परिछिन्न दृष्टयः पंच देवताभक्ता अपि अंत वत्फलं प्राप्नुवंतीत्यभि प्रायेणाह सर्वै प्राप्येत इति एतेसर्वेप्युपासका अव्यक्ते व्यक्त बुद्धयः अव्यक्तेमन इंद्रियाद्यगोचरे निर्विकारे स्वरूपे व्यक्ता स्त्रीरूप त्र्यंबक चतुर्भुज हिरण्य शुंडामंडित देहाद्या कारेण परिणत बुद्ध यो येषां ते अतएव तनुं भक्ता स्तां तां स्वाभिमतं विभर्ति से वित वंतस्ते अंतवत्फल भागिनो भवंतीति शेषः। अंतरा त्मान मजानतां तुच्छ फलत्वमाह योयो यां यां तनुं भक्तः श्रद्धायऽर्चितु मिछति तस्य तस्याचलां श्रद्धांतामेव विदधाम्य हं।। सतया श्रद्धया युक्त स्तस्याराधन मीहते।। लभतेच ततः कामान्मयैव विहिता न्हितान्।।

अंतवत्तु फलं तेषां तद्भवत्यलपमेध सां।। गतागतं काम कामाल भंते इति पुनरव्यक्तं व्यक्तिमापन्नं मन्यते मामबुद्धयः।। परं भावमजानंतो मामव्य य मनुत्तमम्।। शब्द ब्रह्मणि दुष्पारेचरंत उरु विस्तरे।। मंत्र लिंगै र्व्यवछिन्नं भजतों न विदुः परं मितिकृष्ण नारदा द्युक्त्या परिछिन्न दृष्टे निपेधातो ननु सेव्य सेवक भावरूप परिछिन्न दृष्टिं विनोपास नैवनस्यात्तर्हि किमर्थ माक्रोश्यतें अंतवत्फल भागिन इति तत्राह।। सत्यं तथापि।। ज्ञात्वा ज्ञात्वा च कर्माणि जनोयमनु तिष्ठति विदुषः कर्म सिद्धस्यात्तथाना विदुषो भवेत्।। अनेन वाक्येनाज्ञानिनां विद्वदिवकर्म सिद्धिर्नभवति।। तथोक्तं भगवता उदाराः सर्व एवैतेज्ञानीत्वा त्मैमेमतमिति'' सर्वेभ्यो भक्तेभ्योज्ञानि प्रशंसया ज्ञान मेव

दृढीकृतम्।। तस्मात्सर्व श्रुति स्मृति पुराण संमतं अन्तरात्मन मजानंतो[१०] अंतवत्फ्ल भागिनो भवंतीति सत्य मेवोक्तं।। तत्र श्रुत्यादि प्रमाणमाह। एको देवः सर्वभूतेपु गूढः सर्वव्यापी सर्व भूतांतरात्मालोकपा लोध्यक्षः सर्व भूताधि वासे साक्षी चेता केवलो निर्गुणश्च।। एको विष्णुमह द्भूतं पृथक्भूता न्यने कशः।। त्रींलोकान् व्याप्य भूतात्मा भुक्ते विश्वभुगव्ययः सत्वंरजस्तम इति प्रकृते र्गुणास्तै युक्तः परः पुरुप एक इहास्य धत्ते। स्थित्यादये हरिविरं चिहरेति संज्ञाः श्रेयांसि तत्र खलुसत्वतनोनृणां स्युः।। तथा पद्म पुराणे।। ''सत्यभामां प्रति श्री कृष्ण वाक्यं।। एकोहं पंचधाजातः क्रियया नामभिः किलेत्यादि वाक्यैः'' सर्वव्यापकं सर्वान्तिर्मिणं सर्वाधिष्टानमजानं तस्त त्तल्लोकवासिनं परिछिन्नं मत्वा तत्तल्लोक प्राप्ति मुछिश्यबहु कृछ्रंतप आदिना यतंतिपरंत्व मुत्र पुण्य जितोलोकः क्षीयत इति वाक्यात् गतागत लभंत इति भावः।।

ननु नारद पंचरात्र शिव पुराणादिपु वैकुण्ठ कैलाशदीनां ब्रह्माण्डा दवहिः स्थितत्वात् नित्यत्वम प्राकृत त्वञ्च प्रतिपादितं अतस्तत्रत्यामप्राकृत देहत्वादतीन्द्रिय त्वाच्चनित्य सुखमस्तीति केचिन्मन्यन्ते तर्हि कथंमन्त्रवत्फ्ल भागिनः 'इति वक्तुं शक्यते? प्राकृतं प्राकृत कार्यं न भवतीत्यतः सत्यं त्रिकालावाधित इवि तद् भक्ताः मन्यन्ते' एवं ब्रह्माण्डान्तर्वर्त्यपि श्वेत दीपं नित्यं तथा वृन्दा वनाद्यपि सुदर्शन चक्रस्थं नित्यं तथा काश्यपि शंकर त्रिशूलस्थानित्येतिवदंति, परन्तु दृष्ट श्रुतमसद्बुद्धवा नानुध्या येन्न संविशेत् 'यदिदं मनसावाचा चक्षुर्भ्यां श्रवणादिभिः नश्वरं गृह्यमाणं च विद्धि मायामनोमयं श्रुतञ्चदृष्टञ्चद् दुष्ट मित्यादि भगवन्मतं विस्मृत्य वदन्ति तथाऽप्राकृतत्वमप्येवमेव कथमित्यपेक्षायाँ प्रमाणमाह ''भगवानेक आसिदमग्र१४ आत्मात्मनां विभुः'' आत्मेनच्छानुगतावात्मा नानामत्युपलक्षण इति मैत्रेय वाक्याद् यदाहरिरिच्छैव प्रकृतिस्तर्हि तामिच्छांविना वैकुण्ठादिकं भवेन्न भवेदित्य।। श्रूयते च भागवते वैकुण्ठः कल्पितो येन लोको लोक नमस्कृतः ''रमया प्रार्थ्य मानेन देव्याततत्प्रिय काम्यया।। एवं वृन्दावन काश्यदि वासिनां मनुष्यपशु पक्षि वृक्ष पाषाण गृहादीनांमस्मदादिवदाद्यन्त वैकुण्ठादि– श्रुतं सत्यं मन्यन्ते प्राकृतं परे। हरेरिच्छैव प्रकृतिस्तां विना तत्कथं भवेत्।।६।।

**टीका–** वत्वादनित्यत्वं प्रत्यक्षं दृश्यत एव। ननुतर्हि पुराण वाक्यस्य वैयर्थ्यं स्यादिति चेन्न यतस्तत्रत्यो जनस्तत्रत्य तीर्थ देवता सेवन भजन पुण्याति रेकेण क्षिप्रं नित्यम प्राकृतं स्वादन सुखं लभते। अतस्तत्प्रापकत्वात्तत्रैव नित्यत्वाद्युप चर्यत इति भावः। नन्वस्तु नामास्मद्दृग्गोचर वृन्दावनादीनां तथात्वं परन्तु महत्तपसा श्वेत द्वीपगतानां सूर्य सदृक् प्रभावतां तेषां स्वातन्त्रयं निर्भयत्वञ्चोचितमेव। 'यतस्तत्र ब्रह्म प्रलयेपि मृत्यु

भयाभावात् तत्राह सत्यं तथापि तत्रत्यानां सर्वदा मानस जप पराणां साधनाभि निवेशः कथञ्चिद् वासना विशेषं पारतन्त्र्यञ्च द्योतयति पुनरपि भारते व्यासेन तेषामन्तर्यामिणि वासुदेवे साधनतारतम्येन भावि प्रवेशस्य सूचितत्त्वात्। यस्त्वात्म रतिरेवस्या दात्मतृप्तश्च मानवः आत्मन्येव सन्तुष्टः तस्य कार्यं न विद्यते 'इति भगवद् वाक्य विरोधेन ते सद्यो मुक्ताः स्वतन्त्राश्चेति वक्तुं शक्यंते, तस्माद् यावत्स्यादस्वतन्त्रत्वं तावदीश्वरतो भयमिति वाक्यात्तेषां किञ्चित्कार्याभिनिवेशेन शुभाशुभ परित्यागाभाव इति सूचितं तस्मात्तस्मिन्नपि परिणामे नित्यानन्द प्रापक स्थानत्वान्नित्यत्वा द्युपर्यत इति भावः। यत आत्मातिरिक्तस्यानित्यत्वे सर्वश्रुतिप्रसिद्धेः[६] केचित्पुनः मनोमात्र विलसिते दृश्यप्रपञ्चे सत्त्वमतिमास्थाय–

**दृश्ये सत्त्वे मतिं कृत्वा सिद्धाननिन्दन्त्यचेतसः।।**

विश्वस्याविर्भाव तिरो भाव रूपेण नित्यं त्रिकालाबाधितत्वं च स्वमत्त्या मत्वासर्वं दृश्यं मामेति वदतां श्रीराम कृष्ण व्यासादीनां मतमविज्ञाय तदनुयायिनः सिद्धान्निन्दन्ति ते तत्प्रतिपक्षिणो नष्टात्मानो ज्ञेयाइत्याशयेनाह दृश्य इति दृश्ये मन इन्द्रियादिग्राह्ये प्रपञ्चेसत्त्वमति सत्त्वविशिष्टांमति कृत्वा धातायथापूर्वयकल्पयात यतो वा इमानि भूतानि जायन्ते येन जातानि जी वन्ति यत्प्रत्यभि संविशन्ति 'इत्यादि सृष्टि प्रलय श्रुत्या कनकादिषु कुण्डलाद्याकारो नित्यमस्ति तथा प्रलयेऽपि तिरोभाव रूपेण विश्व न्नित्यमस्ति तथा सृष्टि काले आविर्भाव रूपेण विश्वं प्रकाशते 'इति अन्यथा प्रलये विश्वस्यात्यंताभावे उत्पत्तिरेव न स्यात्। तस्मात् त्रिकालाबाधितं नित्यं विश्वमस्तीति श्रीरामकृष्ण व्यासादि प्रतिपादित श्रुत्यादि सिद्धान्तमविज्ञाय वृथा कथ्यन्ते श्रुत्यादिसिद्धान्तमाह नारादासीन्नो सदासीत्तं नीनासीद्रजो नो व्योमा परो यत्।

तथा रामवाक्यं श्रूयते दृश्यते यद्यत्स्मर्यते वा नरैः सदाअसदेव हि तत्सर्वं यथा स्वप्न मनोरथः ''मायायाकल्पितं विश्वं परमात्मनि केवले रज्जौ भुजङ्गवद् भ्रान्त्या विचारे नास्ति किंचन।।

यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि प्रतीतं, तथा वेदस्तुतौ न यदिदमग्र आसं न भविष्यदतो निधनादनुमितमन्तरा त्वयिविभाति मृषैक रसे'' अत उपमीयते द्रविण जाति विकल्पपथैर्वितथं मनोविलास मृत्त मित्ययं त्यबुधाः ''यत्रमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा अविद्यायात्मनिकृत इति तदब्रह्मदर्शनं मन्य मान इदं विश्वंमाया रचितमात्मनि ''अविद्यारचित स्वप्न गंधर्व नगरोपं मम्'' गन्धर्वनगर प्रख्या स्वममाया मनोरथः'' दृश्यमानाविनार्थेन न दृश्यते मनो भावः। पुनरुद्धवं प्रति दृश्यप्रपञ्चस्य

मायिकत्व प्रतिपादकत्वं भगवद् वाक्यं (असत्त्वादात्मनोन्येपां भावानां तत्कृताभिदा) गतयोहेतयश्चास्य मृषास्वप्न दृशोयथा (त्वय्युद्भवाश्रयति यस्त्रिविधो विकारोमातरा पततिनाद्य पवर्ग योर्यत् जन्मादयोस्य यदमी तवतस्य किं स्युराद्यं तयो र्यदसतोस्ति तदेव मध्ये रश्मिजालं खे र्यद्वदृश्यते जलवद् भ्रमात्। (भ्रान्ति ज्ञानात्तथा रामत्वयि सर्वं प्रकल्पितं न द्वैत मूल महादुःखं नान्यत्तस्यास्ति भेपजं) 'दृश्यमेतन्मृषा सर्वमेकोहंचिद्र सोमल ''इत्यादि श्रुतिस्मृतिपुराण सम्मत तेन दृश्य प्रपञ्चस्य भ्रान्ति जन्यत्वादाद्य न्तयोरसत्त्वाच्च मध्येप्यसत्त्वं स्वतः सिद्धमेव पुनरा स्तांतावज्जड प्रपञ्चस्य निषेध कथायत्र भगवत्स्वरूपत्वेन प्रतिपादिते स्थूलं सूक्ष्मरूपे अनिनिपिध्यते तदाह'' अमूनि भगवद् रूपे मयाते अनुवर्ण्यते ''उभे अपि न गृह्णन्ति मायासृष्टे विंपश्चितः।। इत्थं भावेन कथितो भगवान् भगवत्तमः ''नेत्थं भावेनं हिपरं द्रष्टुमर्हति सूरयः, नास्यकर्मण जन्मादौ परस्यानु विधीयते, कर्तृत्व प्रतिपेधार्थं माययारोपितं हितत्।। एवंहि मोक्षधर्मे आख्यायिका उपरि च वसोर्यज्ञे अदृश्य रूपेण स्व भागं गृहीत्वा गतस्य विष्णोरदर्शनेन क्षुभितस्य वृहस्पतेः समाधानार्थं एकत द्वितत्रित वसिष्ठादि मुनिभिः पूर्वन्तु स्वैरेवानुभूतं विष्णुदर्शन दौर्लभ्यं प्रति पादितं कथमित्ययेक्षायाँ तदेवाह श्वेतद्वीप वासिनः श्री वासुदेवस्य दर्शनार्थं मेकतद्वितादिभिऋषिर्मेरोरुत्तर पार्श्वेचत्वारि वर्ष सहस्राणि तपस्तप्तं तत्तपसः प्रभावेण श्वेत द्वीपं गत्वापुनर्वर्षशतं तपस्तप्तं तत्प्रभावेण च तत्रत्यानां विष्णु भक्तानामेव दर्शनं लब्धं न तु विष्णोः पश्चान्तत्रवैष्णवाग्रणीर प्राकृत देहोनारदः किञ्चित् तपस्तप्त्वा श्रीवासुदेवं द्रष्टुं गतस्तस्मै प्रसन्नः सन् भगवान् वैष्णवैःसह स्व मूर्ति प्रकटितवान् पुनरनेनैवकेवलं स्वभक्तस्य कृत कृत्य तायाः भूत् इति स्वरूप निर्णयं विवक्षु भगवान नारदमशिक्षयत् भो नारद माया ह्येषा मयासृष्टा यन्मां पश्यसि चक्षुषा सर्व भूतगुणैर्युक्तं नैवंत्वं ज्ञातुमर्हसि। एतत्त्वयान विज्ञेयं रूपवानिति दृश्यते इच्छं मुहूर्त्ता नश्येयमीशोहं जगतोगुरुः ''अहंहि जीवः सज्जातो मयि जीवः समाहितः नैवंते बुद्धि रत्राभूर्दृष्टो जीवो मयेति वै।।

### कृष्णमेव विनिदन्ति मायावादिवि निंदकाः[७]।।

अनेन स्वस्वरूपस्य मन आदींकंद्रियागोचरत्त्वं प्रकाशितं अतोऽप्राकृत चक्षुर्म्यामपि यद्दृष्टं तत्सर्वं मायैवेति भगवन्मताभिप्रायः माया स्वरूपमेवाह ऋतेर्थंयत प्रतीयेतनप्रतीयेत चात्मनि तद्विद्यादात्मनो मायां यथाभासो यथा तमः तस्मात्पदार्थं विनामृगजलवन्मिथ्या प्रतीतिः सैव मायेति श्रीनारायणादिभिः प्रतिपादितं आभास्तुमृषा बुद्धि रविद्याकार्य मुच्यत इत्यादि वाक्यैः शुक्ति रजत वज्जगदा भासस्या द्यंतयोरसत्वाद् दृश्य त्वाच्च त्रिकालबाधित त्वं मृषात्त्वं च प्रतिपादितं एतदेव श्रीरामकृष्ण व्यासाष्टावक्र

शंकरादिमत तन्मतमविज्ञाय निजानंदस्वरूपाज्ञान कुतर्क भ्रष्ठ विवेकाः संतस्तन्मतानुयायिनः सिद्धान्श्रीशंकरा चार्य हस्ता विद्यारण्य श्रीधरादीन्निंदंतिते कृष्णं व्यासं अथवा श्रीकृष्णमेव विनिंदंतियतोऽवस्तुत्वेन मध्येकलिपतस्य जगतो मायेति मृषेतिवादिनः श्री रामकृष्णादय एवातस्तो द्विनिंदका अचेतसो नष्टात्मानोज्ञेयाः पुनर्येनभूम्ना परमात्मना चतुर्भुजत्र्यंबकादि रूपं स्व भक्तानां स्वरूप प्राप्तौसालंबयोगसंपादनाय गृहीतं तदुपाये नैव निरालंब योगं प्राप्ता अतएव ब्रह्मोपासकाः सर्वत्र समदर्शिनस्तान्स्वयं दृश्याभि निवेशाः संतः शून्य वादिन इति वदंति परंतु स्वयं शून्य वादिन इति न जानंति कथमित्यपेक्षायामाह या निशा सर्व भूतानां तस्यां जागर्ति संयमी यस्यां जाग्रति भूत्तानि सानिशा पश्यतो मुनेरिति कृष्णोक्त्या निशेवनिशाब्रह्म निष्ठा त्रिकाला बाधिता सदो दितातस्यां ज्ञान चक्षुः संयमी सर्वदा जागर्त्ति जगद्भूतिं हित्वा सत्यं स्वरूपे सावधानोवतिष्ठत इत्यर्थः पुनर्यस्यांभ्रांत्याकल्पित व्यवहारावस्थायां भूतानि देहाभिमानिनो जीवा जाग्रति त्रिकालवाधितं शून्य व्यवहारं सत्त्यत्वेनांगीकृत्य प्रलय पर्यतं मृताएव पुनम्रियंते जायं ते च सावस्था स्वरूपं पश्यतो ब्रह्म निष्ठस्य निशा अमावास्या रात्रि सदृशीयतस्तस्योतस्य सत्त्यत्त्वेन दर्शनाभावा तु पुनस्तस्यामपिरात्र्यां के चिद्विवांधा उलूकादयो व्यवहारपराः संतो व्यवहार शून्यान्मूकभूता शुक हंसादी न्निंदंतितद्व त्रिकालबाधितं रज्जु सर्प वद्भ्रांत्याकल्पितं गंधर्वनगरव त्क्षणिकं मृग जल वदर्थ शून्यं जगत् तत्र ये सत्त्वाभि निवेशिन स्तएव शून्यवादिन अशून्य ब्रह्म विहारान्जगद्व्य वहार शून्यान्परम हंसान् उलूकबन्निंदंति अतो नष्टात्मानोज्ञेया इति भावः।।७।।

पुनर्येन भूम्नापरमात्मन चतुर्भुज जत्र्यंबकादिरूपं स्व भक्तानां स्वरुप प्राप्तौ सालम्बयोग सम्पाद नाय गृहीतं तदुपायेनैव निरालम्बयोगं प्राप्ता अतएव ब्रह्मोपासकाः सर्वत्र समदर्शिनस्तान् स्वयं दृश्याभिनिवेसाः सन्तः शून्यवादिन इति वदन्ति परन्तु स्वयं शून्य वादिन इति न जानन्ति कथमित्यपेक्षायामाह ''या निशा सर्वबूतानां तस्यां जाग्रति संयमी, चस्यां जाग्रति भूतानि सा निशापश्यत मुनेः'' इति कृष्णोक्त्या निशेव निशाब्रह्म निष्ठा निकालाव्बाधिता सदोदिता वस्यां ज्ञानचक्षुः संयमी सर्वदा जागर्ति, जगत् भ्रान्ति हिंत्वा सत्य स्वरुपे सावधानोऽवतिष्ठत इत्यपिः पुन र्यस्यां भ्रान्त्या कल्पित व्यवहारा वस्थायाँ भूतानि देहाभिमानिनो जीवा जाग्रति त्रिकालवाधितं शून्य व्यहारं सत्यत्वेनांनीकृत्य प्रलय पर्यन्त मृता एवं पुनर्मियन्ते जायन्ते च सावस्था स्वरूपं इत्याशयेन श्लोकद्वयमान एवमिति द्वैतभिनिवेशिनोऽन्योन्याश्रयत्वेनामान मानयोः शक्तिशक्तिमतोः परस्परं भेदं गर्जन्ति वस्तु त्वेन वदन्ति परन्तु येऽप्यबुद्धयोऽव्यवसायिनः श्री कृष्ण प्रोक्तया व्यवसायात्मिकयैकाबुहध्या हीना इत्यर्थः।

यतस्सभेद उपाधिवैशिष्ट्यञ्च केवलं व्यवहारतः व्यवहारमात्रं न वस्तुतः कथभूतः क इव प्रभाया ज्योतिषेवेति यथाप्रभा समूह एव ज्योति स्तथापि ज्योतिषःप्रभेति भेदेन निर्देशो वाचो युक्ति मात्रं तथैवशिरो भूतस्य राहो राहोसिरः इत्युपचारमात्रं न वस्तुत इति भाव। ननु केवलं व्यवहारस्य स्वप्रतुल्यत्वे न मिथ्यात्वं चेत् तर्हि -

पश्यतो ब्रह्मनिष्ठस्य निशा अमावस्या रात्रिसदृशी यतस्तस्यान्तस्य सत्यत्वे न दर्शनाभावात् पुनस्तस्यामपि रात्र्यां केचित्दिवान्धा उलूकादयो व्यवहार परः सन्तो व्यवहार शून्यान्मूक भूतान् शूक हंस दीन् निन्दंति तद्वत् त्रिकालबाधितं रज्ज सर्पवद् भ्रान्त्या कल्पितं गन्धर्व नगरवत् क्षणिकं मृगजलवदर्थ शून्यं जगत् तत्र ये सत्याभि निवेशिन त एव शून्य वादिन अशून्य ब्रह्म विहारान् यद्व्यवहार शून्यान् परं हसान् उलूकवन्निन्दन्ति अतो नष्टात्मानो ज्ञेया इति भावः। एवमेवान्ये तार्किकादयः स्वमतं तुल्यव्यवहारं सत्यत्वेनांगीकृत्य परस्पर भेदं वैशिष्ट्यं चोपदिशन्ति तेपि तत्त्वानभिज्ञाः।

**एवं शक्तेः शक्तिमतोर्भेदं गर्जंत्यं बुद्धयः।**
**प्रभायाज्योंतिषश्चेव केवलं व्यवहारतः।।८।।**

एवमेवान्ये तार्किकादयः स्वमतं तुल्य व्यवहारं सत्यत्त्वेनांगी कृत्य परस्पर भेदं वैशिष्टयं चोपदिशं तितेपितत्त्वान भिज्ञाइत्याशयेन श्लोक द्वयमाह एवमिति येद्वैत्ताभि निवेशिनोऽन्योन्या श्राश्रय त्वेनाभास मानयोः शक्ति शक्ति मतोः परस्परं भेदं गर्जंति वस्तुत्वेनवदंति परंतु तेप्य बुद्धयो व्यवसायिनः श्रीकृष्ण प्रोक्तया व्यवसायात्मिक यैकया बुद्धयाहीना इत्यर्थः यतः सभेद उपाधि वैशिष्टयं चकेवलं व्यवहारतः व्यवहार मात्रं न वस्तुनः कथं भूतः कइव प्रभाया ज्योतिषश्चयेवेति यथा प्रभा समूह एवज्योति स्तथापिज्योतिषः प्रभेति भेदेन निर्देशोवा चोपक्ति मात्रं तथैवशिरो भूतस्यराहोराहोः शिर इत्युप चार मात्रंनवस्तुत इति भावः ननु केवलं व्यवहार स्य स्वप्र तुल्यत्वेन मित्थ्यात्त्वं चेत्तर्हिमहांतो विद्वांसो प्यैहिका मुष्मिक फलभोगार्थं पतंतोदृश्यं ते पुनरन्यान पिनात्माधन भूतकर्मसुप्रवर्त्तयंति तस्मात्तेषां वाक्ये विश्वासः कर्त्तव्यो वानवेत्यत्र आह स्वप्नेनिरूक्त्या गृहमेधि सौख्यंनयस्य हेयानुमितं स्वयं स्यात्तूनतस्य तत्वग्रहणाय साक्षादृरीयसीरपिवाचः समासन्निति जड भरत वाक्यात्ते महांतोप्यविश्वसनीयाः यतः स्वयं पाषाण प्लवा अन्यानपि विश्वस्तान्नाकृष्य निमज्जयंतितस्मान्मनोमात्र विलसितंस्वप्नसदृशंगृहमेधि सौख्यं सत्त्यत्त्वेनांगी कृत्त्य भोक्तृभ्योग्ययो दृष्टय दृश्ययोः शक्तिमतो र्भेदनिश्चया अबुद्धय इति भावः।।८।।

**यदि प्रतीति र्जायेत स्वातं त्र्येण पदार्थयोः।**
**वाच्यस्तदातयोर्भेदोनान्यथारज्जु सर्पयोः।।९।।**

पुन्नरपियद्युभयोः पदार्थयोः पृथक्त्वेन स्थितिः स्यातदातयोर्भेदोवक्तुंशक्योनान्यथेत्यभिप्रायेणायदीति यदपि पदार्थयोर्घट पटयोखि स्वातं त्र्येणैकं विनाप्यन्य प्रतीति र्जायेत तदात्तयोः परस्परं भेदो वक्तुं शक्यते नान्यथा पृथक्त्वेन प्रतीत्यभावेपि साधर्म्येऽनुकूल दृष्टांतमाहरज्जु सर्पयोरिवेतियथारज्वधिकरणं विनाभासमान सर्पस्य स्वातंत्र्येण प्रतीत्यभावात्केवलं व्यवहारार्थं कल्पितयोः शक्तिशक्ति मतोर्भेदो न वस्तुत्त्वेनवक्तुंशक्यः शक्तिलयेन पुरुपस्य कैवल्ये प्रमाण माह यद्येषो परता देवी मायावैशारदी मतिः संपन्न एवेति विदुर्महिम्नि स्वेमहीयते प्रकृतः पुरुषस्येहदह्यमानात्वा हर्निशं तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः भुक्त भोगापरित्यक्ता दृष्टदोषाच नित्यशः नेश्वरस्याशुभंधत्तेस्वे महिम्निस्थितस्य च तस्माद्यथा आलोकोपाधि कादेहादिचत्छाया आलोक लयेलीयते एव महंवृत्त्यु पाधिकादेहा दिचछाया आलोकलयेलीयते एव महं वृत्त्युपाधिकाशक्तिम तोर्भेद प्रतीतिरप्यहं वृत्तौलीनायांलीयत इति भावः।।९।।

**विशिष्टं सगुणं प्रोक्तं निर्गुणं निर्विशेषणं**
**एक रूपं द्वयंज्ञात्वा हेमार्थीवाकृतिं चरेत्।।१०।।**

नन्वात्म व्यतिरिक्तस्य पृथक्त्वेनानवस्थानाद्भेदरयात्यंतोच्छेद श्चेत्त र्हिसगुण निर्गुणयोः कथं भिन्नत्वं पुनर्गुण गुणिनोः समवाय इतिन्यायोपि वैशिष्ट्य द्योतकः कथं प्रवृत्तस्तत्रदृष्टांत पूर्वकं श्लोक द्वयमाह विशिष्टमिति विशिष्टंमायोपाधिकंयच्छबलं ब्रह्मतत्सगुणं प्रोक्तं यन्निर्विशेषणं मायोपाधि विनिर्मुक्तं शुद्धंतत्तुनिर्गुणमिति प्रोक्तमतोवाच्य वाचक निर्देश्येत्यनिर्देश्यो विकल्पितः सवाच्यवाचकतयाभगवान्ब्रह्मरूप धृक् नामरूप क्रिया धत्तेसकर्मा कर्मकः परइत्या दिवाक्यै र्मायांगीकार परित्यागोपाधि कृतएव सगुण निर्गुण भेदो नवस्तुतइत्यर्थः एवं सर्वोपाधि विनिर्मुक्तेस्वरूप तोऽनिर्देश्येऽविकल्पिते वस्तुनि ज्ञानगुण समवायादिवैशिष्ट्यं स्वतएत निरस्तं तस्मात्सगुण निर्गुण रूपेणप्रति पादितंद्वयमप्ये करूपं ज्ञात्वाचरेत् उभयोर्भेद दृष्टिं परित्यज्य विचरे दित्यर्थः कइवाकृतिं हेमार्थीव यथा सुवर्णश्च सिंहदेवताकृर्तिर्यथा तुलां मौल्यंदत्वाऽधमत्वभय प्रदत्त्व पूज्यत्वादि परित्यज्यकेवलं सुवर्ण बुद्धैयव गृह्णा तितद्वदित्यर्थः।।१०।।

**घनीभूतं द्रवीभूतं घृतमेकं यथाभवेत्।।**

**विशिष्टं शुद्धमद्वैत्तं ज्ञानमेकंनभिद्यते।।११।।**

पुनर्घृत दृष्टांतेन दृढ़यति घनी भूतमिति शीतोष्णादि संसर्गेण घनीभूतं द्रवीभूतं चोभयमप्येक रूपमेव यतो घृतत्वाभेदतयायथा न भिद्यते तथाऽद्वैत ज्ञानमपि सर्वशक्तियुतं विशिष्ट मित्युच्यते तदेवाखिलो पाधि विनिर्मुक्तं शुद्धमित्युच्यते परंतु ज्ञान रूपत्वादेक मेवनभिद्यते भेदं न प्राप्नोतीत्यर्थः। ननु निर्विषयकं नाम-विपयाकारवृत्तिशून्य मनुभवात्मकं, तथा सविषयकं नाम विपयाकारवृत्त्यवच्छिन्न मेवं पृथक्धर्मकं द्वयमेक रूपंनित्यंचकथंवक्तुं शक्यते तथा च नीला द्याकारेण परिणतं पीताद्याकारेण नष्टं स विषयकं ज्ञानं भेदं कथं न प्राप्नोतीत्यत आहनीलाद्याकार वृत्तय एवोत्पद्यंतेलीयंते चनतु ज्ञानं यथोदधितरंगाणामेवोपत्तिलयौ न तूदधेः पुनर्नित्य ज्ञान स्वरूपादात्मनो दृश्यद्रष्ट्रादि धर्मक ज्ञानस्यपृथक्त्वाभावे शुकवाक्य प्रमाणमाहदीप श्चक्षुरुपं च ज्योतिपोन पृथक्भवेत्।। एवं धीः खानिमात्राश्चनस्युरन्यतमाद्वतान् विकारः ख्यायमानो पिप्रत्यगात्मान मंतरा न निरुप्योस्त्यणुरपिस्याच्वे च्वित्सम आत्मवैत न हिसत्यस्य. नानात्त्वम विद्वान्यदिमन्यते नाना त्व मात्म नोयद्व ज्योतिपोर्वातयोरिवेत्यादि वाक्यैर्महदहंकार पृथिव्य प्तेजोवाय्वा काशातृन्मकेन वृहद्रूपेणांड कोशात्मकेन कर्मज्ञानार्थ रुपेणा भासमानमप्य द्वितीय ज्ञानमेव ब्रह्मेत्यर्थः।।११।।

**असंगः केवलः शुद्ध आत्मायदिनिरूपितः।**

**श्रुत्त्यातर्हिकथंवक्तुं वैशिष्ट्यं तत्रशक्यते।।१२।।**

केचिदात्यंतिके ज्ञान कृतेपि प्रलयेऽवशिष्टे केवलेचि द्धने माया वैशिष्ट्य् नित्यं मत्वात्तस्याः शक्ति ह्रास एव माया ह्रास इति केवलं वाचो युक्तिर्नतु स्वरूप तो माया ह्रास अतोमाया वैशिष्ट्यं नित्य मेववदंति तन्निषेधयितु माह असंग इति असंगः द्वितीयस्या भावात्कस्यापि संग रहितः असंगोत्ह्ययं पुरुष इति श्रुतेः पुनः केवलः अद्वितीयः शुद्धः उपाधि मलरहितः आत्मा अत तीत्यात्मातत्पदार्थः असंगोह्ययं पुरुषो यश्चासावा दित्त्यइत्यादि श्रुत्त्या यदिनिरुपितः यदीत्य संविग्धे संदेह वचनं तत्र तस्मिन् निरंजने चिद्रूपे तत्पदार्थे वैशिष्टयं मायादि संबंधंकथंवक्तुं शक्यते पुनः पुराण वाक्यै र्निषेधयति प्रकाश रूपोहमद्वयो सकृद्विभातोहमतीवनिर्मलः विशुद्ध विज्ञान घनो निरामयः संपूर्ण आनंदमयोहमक्रियः सदैव मुग्क्तो हमचिंत्यशक्तिमानततींद्रिय ज्ञानम विक्रियात्मकः अनंत पारोहमहर्निशं बुधैर्विभावितोहं वृद्धिवेदवादिभिः आत्मा साक्षी विभुः पूर्ण एकोमुक्तश्चिदक्रियः असंगो निः स्पृहः शांतोभ्रमात्सं साखानिव

आत्मानित्यो व्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः अविक्रयः। स्पदृग्हेतुर्व्यापको संग्यनावृत इति श्री राम चंद्राष्टावक्रं प्रहादादि भिर्मुमुक्षुंप्रतित्वं पदार्थ शुध्यर्थ मात्मस्वरूप स्यासंगत्त्व प्रकाशरूपत्व नित्त्य त्त्वैक त्वा दिलक्षणैः प्रतिपादनान्मिथ्यैवमाया संबंध कल्पनेतिभावः नन्वसंगत्वनाम संगबाधराहित्यं यथा पद्म पत्रमंभसासह संगत मप्यलिप्त त्वादसंगमेवतद्व वत्रापि योज्यं कथ मुच्यते सर्वथा संगपरित्याग इति अन्यथा जीवन्मुक्त व्यवहारोपिन स्यात्तत्राह सत्यंतथापि सदृष्टांतोऽपक्वज्ञानिनोऽवशिष्ठप्रारब्धभोगपर्यतं जीवन्मुक्त-व्यवहार सिद्धयर्थं बाधितानुवृत्ति स्वीकारान्समाधेः पूर्वं संगच्छतेनत्वपरोक्ष साक्षात्कारे चरमदशायां देहं च न चरम स्थित मुत्थितंवा सिद्धोवि पश्यतियतोध्यगमत्स्वरुपं दैवादये क्षतमथ दैव वशादुपेतं वासोयथा परिकृतंमदिरा मदांध इति हंसवाक्या च्चरम दशायां भोगत्या गादुभावेव निरस्ताविति भावः।।१२।।

**चैतन्यंवृत्यवत्छिन्न मपीदस मंजसं।।**

**व्यापकस्य विभोर्दृतेखत्छेद कताकथं।।१३।।**

ननु चरमदशायां कैवल्य रूपेणावतिष्ठमानस्य सिद्धस्य देहादिवृत्तिं विनापि पूर्व संस्कारेणैव कुलाल चक्र वदेह व्यापारस्य संभवावृत्तेर पेक्षानास्तीति सिद्धं तर्हि श्रीरामचंद्रेण हनूमंतं प्रतितत्त्व ज्ञानो पदेशेबुध्यवच्छिन्न चैतन्य मेकं पूर्णं तथापरं आभा सस्त्व परं बिंबभूत मेवं त्रिधाचितिरि तिचित्ते र्वृत्यवत्छिन्नत्त्वेन त्रैविध्यं कथं प्रतिपादितं तत्राह चैतन्य मिति वृत्त्यवत्छिन्नं चैतन्यमहं ब्रह्मेति वृत्यऽवत्छिन्नं भेदं प्राप्त मिदमप्यसमंज संसमं न भवति यतोऽहं वृत्ति विशिष्टस्याऽशयस्य विद्यमानत्त्वात नन्वहं ब्रह्मेति वृत्य नुसंधान कारकं चित्तं तुं कैवल्ययो पयुक्तमेव यतो मन एव मनुष्यस्य कारणँ बंध मोक्षयोर्गुणानुरक्तं बंधायरतं वा पुं सिमुक्तय इति स्मरणात्तर्हि किमर्थ्य माक्रोश्य वृत्ति मदसमंज समिति तत्राह सत्त्यं तथा पि केवलयाअहं ब्रह्मेति प्राप्तयामनो वृत्त्याकैवल्य पूर्णानंदाय शिथिल प्रयत्न माभूदिति हेत्तोर्वृत्य वछिन्नमसमंजस भित्युक्तं यतोवृत्ति सहितमंतः करणं ब्रह्म सुखास्पृष्टं सदसन्निष्ठं शवतिक्षणं भवतु काक्षतिरिति चेदात्मान मिंद्रियार्थं च परं यदुभयोऽपि सत्त्याशय उपाधौ वैपुमान्पश्यतिनान्य दानिमित्ते सति सर्वत्र जलादावपिपुरुषः आत्मनश्च परस्यापिभिदां पश्यतिनान्यं वा नित्यं ददातिकामस्यत्छिद्रं तमनुयेरयः योगिनः कृत मैत्रस्य पत्युर्जायेवपुंश्चली कामोमन्युर्मदोलोभः शोकमोह भयादयः कर्मबंधः श्चयन्मूलः स्वीकुर्यात्कोनुतद्बुधः मनोगतिं न विसृजेज्जितप्राणो जितेंद्रिय इत्यादि वाक्यैरहंवृत्तेर्लय एवात्माकार तयाभावितव्यः श्रीरामचंद्रेण चित्ते स्त्रैवित्ध्यं प्रतिपादित्तं तत्तु सोपाधिकं समाधेः पूर्वं त्रिवृद्धत्युपाधिनात्रिधा भासमानाप्येकैवचित्तिरिति वक्तुमितिभावः अत्तोव्यापकस्य सर्वगतस्य विभोः

परिपूर्णस्य व्याप्यायाऽपरिच्छिंनायावृत्तेखच्छेदकताकथं संभवति न कथं चिदित्यर्थः।।१३।।

**खद्योततारा चंद्राणां प्रकाशः प्राक्खगोदयात्।**

**तथाबुद्धेस्तु त्रैविध्यमग्रेबोधाद्विभासते।।१४।।**

पुनः स्वरुपाज्ञानविजृंभित गुण कृत बुधि त्रैविद्धयं वक्तुं दृष्टांतोपयोगितया श्लोकांतरमाह खद्योतेति खद्योतादीनां प्रकाशोज्योत्स्नायाखगोदया त्सूर्योदयात्प्राक्पूर्व मेव यथा तथा बुद्धेरपि गुणतो जाग्रदादित्रैविद्ध्रयं बोधात्तत्वज्ञानादग्रे पूर्वमेवविभासते न तु बोध कालेपीतिभावः ननुखद्योतादीनां सूर्योदये मास्तु प्रकाशःपरंतु तेषां विद्यमानत्त्वात्पुनः सूर्यास्तसमये प्रकाशो दृश्यत एव तद्वद्बुद्धेरपित्रै विध्यंबोधकाले नश्यतु तस्यानुत्पन्नत्त्वान्नाशस्यावश्यं भावित्त्वा च्च पुनर्बुद्धे स्त्रै विद्धयं पूर्ववत्त दवस्थ मेवस्या त्तत्राह यदामहा प्रलयं कर्त्तुमुद्यतः सूर्यः सर्वकला परिपूर्णोदिन रात्र्युपाधिकरं मेरु भस्म सात्कृत्वास्वयं पूर्ण रुपेणावभासते तदाक्व खद्योतादयोलीना इति न ज्ञायते एवं बोधोप्यनादित्त्वान्नित्यः सदोद्यतः स्वयं प्रकाशरूपः स्वरूपेभासमानं बुद्धे स्त्रैविध्यकरं गुणत्रयं दग्ध्वातामपि स्वस्मिन्लीनां कृत्वा केवलानंद स्वरुपेण प्रकाशते तदाक्व जाग्रदा द्यव स्थालीनाइतिन ज्ञायंतेयत स्तूर्या वस्थायालुप्यभावादि तिभावः।।१४।।

**वृत्ते रेवव्यवत्छेदो वृत्यैवक्रियते स्वयं**

**सोपिसा भासयाशक्योवक्तुं केवलया नतु।।१५।।**

ननु सिद्धांतेपिवृत्ति व्याप्तिस्वीकारादहं ब्रह्मेतिवृत्तिरपि पूर्णानंद प्राप्त्युपयोगितयाऽस्तु नाम किमर्थं निषिद्धयते वृत्य वच्छिन्नं चैतन्यम समंजस मितितत्राह वृत्तेरेवेति जीवस्यशोकादि निवृतिकोऽहं ब्रह्मेतियावृतिस्तस्यावृत्ते रेवव्यव च्छेदो वृत्त्या क्रियतेकयेत्य पेक्षायामाह ब्रह्म पारोक्ष्यं निवृत्तिका ब्रह्माहमिति यावृत्तिस्तयैवेति सोपि व्यवच्छेदः साभास या ब्रह्माव भासमानयावक्तुं शक्यो ननु केवलया ब्रह्मावभासशून्य येति पुनः साब्रह्माभितिवृत्तिरपि अहं ब्रह्मेतिवृतेर्लयं कृत्वास्वयमपि पूर्णानंदेलीना सतीपुन र्नोत्पद्यत इतिभावः तत्र प्रमाणमाह विशोकोब्रह्म संपत्या संच्छिन्नद्वैतसंशयः लीन प्रकृति नैर्गुण्यादलिंग त्वादसंभवः यर्हिवावमहिम्निस्वे परस्मिन्कालमाययोः रमेतगत समोहत्यत्क्वोदास्ते तदोभय मितिवाक्यात्साक्षिणी मवस्थाग्रसित्वानिर्विकल्पः सन्तूष्णीं तिष्ठत इत्यर्थः।।१५।।

**ज्ञानादनंतरंभोक्तुं प्रारब्धं शिष्यते यदि।।**

**ज्ञानाग्निः सर्वकर्माणिदहत्येतदनर्थकं।।१६।।**

ननुज्ञानोत्तर काले उत्तर पूर्वार्धयोर श्लेपविनाशौभावत्त एतद्दे हारंभकं कर्मयत्प्रारब्धंत्तत्तु देह पात पर्यंतं भोगं दात्तुं फलोन्मुखं सद वशिष्यतेयत आदेहांतात्क्वचित्ख्याति स्ततः संपद्यते मयेति कृष्णोक्तेः कथंब्रह्माह मिति ज्ञानोत्तरकाले एव सद्यो वृत्तेर्लयेन परांशातिं प्राप्नोतीत्यत आह्ज्ञानादिति ज्ञानादनंतरं तत्त्वज्ञान प्राप्तेः पश्चादपियदि प्रारब्धं सुख दुःखादि साक्षात्कार पदंभोक्तु मवशिष्यत इतिकेषां चिन्मते तर्हिभगवदष्टावक्रादि सिद्धांतेविरुद्धं भवति कथमित्य पेक्षायांत्तन्मत मेवाह ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ज्ञानंलब्ध्वा परां शांतिमचिरेणाधिगत्छति क्वप्रारब्धानिकर्माणिजीवन्मुक्ति रपिक्ववा क्वतद्विदेहकैवल्यं निर्विशेषस्य सर्वदित्याद्यनर्थकंस्यादत स्त्रिविधान्यपि संचित प्रारब्ध क्रियमाणानि कर्माणि प्रदीप्त ज्ञानाग्निः सद्योदहत्येवेति तात्पर्यार्थः ननु एतद्देहारंभकं प्रारब्धं दग्धं मे त्तस्य सद्यएव देह पात प्रसंगः स्यादादेहांतं सुखदुःखादि साक्षात्कारोपि नस्यात्पुनः कथं तर्हि जीवन्मुक्त व्यवहारः संपत्स्येते त्यत्रजी वन्मुक्त व्यवहार प्रकार माह देहोह मिति या बुद्धिरविद्यासा प्रकीर्त्तिता नाहं देहश्चिदात्मेति सैव विद्येति भण्यते एतादृक् विद्यावान्यः सदेहस्थोपि नदेह स्थो विद्वान् स्व प्राद्यथोत्थितः अदेहस्थोपि देहस्थः कुमतिः स्वप्न दृग्यथा इंद्रियैरिं द्रियार्थेपु गुणै रपि गुणे पु च गृह्यमाणे प्वहं कुर्यान्न विद्वान्यस्त्व विक्रियः देहिनो स्मिन्यथा देहे कौमारं यौवनं जरा तथा देहांतर प्राप्ति र्धीरस्तत्रनमुह्यति यथावारिचरः पक्षीसलिलेन च लिप्यते एवमेव कृत प्राज्ञोभूतेषु परिवर्त्तत इति श्रीकृष्ण भीष्माद्युक्तेः स्वर्गापवर्गादि नरकेप्वपि तुल्यार्थदर्शी ज्ञानी समनसः क्षणिक सुख दुःखा दिसाक्षात्कारं निजानंदे स्वरुपेकथं मन्येतत्तस्मात्प्राकृत लोकदृष्टयात्तस्य देहोस्तुवापततु वाऽनेक देहांतर प्राप्तिर्वा विष्णु वदस्तुपरं तु सदेह गतकर्त्तृत्व भोक्तृत्त्वाद्यभि निवेशीन स्यादेवे त्यर्थः अत्र दृष्टांत्तः यथायस्मिन्काले कश्चनरथा श्व शिविकादिरुढः सन्बहुदूरं देशांतरं लोक दृष्टया गतोपि परंतु सतदारभ्य स्वात्मनिगमनादि क्रियां नकल्पयति एवं ज्ञानोत्तरकाले ज्ञानी सर्वमपि शुभाशुभ फलं लोक दृष्ट्या भुंजनपि न किंचिद्भुनक्तीत्यर्थः।।१६।।

**एकमेवाद्वितीयं चे ब्रह्म जीवेश्वरौकथं।।**

**अश्नन्कर्मफलं जीवोनश्नन्नीशः प्रकाशते।।१७।।**

ननु एकमेवा द्वितीयं ब्रह्मनेहनानास्तिकिंचन एको देवः सर्वभूतेपुगूढः सर्वव्यापी सर्वभूतांतरात्मा।। लोकाध्यक्षः सर्वभूताधिवासी त्त्साक्षी. चेताकेवलो निर्गुणश्चेत्यादि श्रुति भिरेक एव प्रतिपादित श्चेत्तर्हि द्वासुपर्णासयुजा सखाया समानं वृक्षं परिपस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्यनश्चनन्न्यो अभिचाक शीतीति श्रुत्याजीवेश्वरौकथं पृथक्त्वेन

प्रतिपादिताविति स्वयमेवाशंक्योत्तर बहुश्रुति वाक्य विरोधापत्त्या तयोरु ।धिकृतो भेदोनवस्तुतइत्यभि प्रायेणाह एकमेवेति एकमे वाद्विंतीयंसजातीया दिभेद रहितं ब्रह्म श्रुत्या प्रतिपादितं चेत्तर्हि जीवेश्वरौलोके कथं भिन्नत्त्वेन प्रतिसिद्धावित्याशंक्य कर्तृत्त्वाककर्तृत्वभोक्तृत्त्वाभोक्तृत्त्वादिभिस्तयोर्भेदमाह एक एव परमात्मा इंद्रियपरतंत्रः सन्कर्तृत्त्वाद्यभिनिवेशात्कर्मफलमैहिकामुष्मिकं सुखमश्नन्‌भुंजन्जीव संज्ञोभवतिस एवेंद्रियाद्यपर तंत्रः सन्कर्तृत्त्वा द्यभावात्कर्मफलमनश्नन्न भुंजन्नीशः स्वतंत्रः सन्प्रकाशते ननु स एवेंद्रियाद्यपरं सन्न इति कथं वक्तुं शक्यते यतस्तयोः स्वातंत्र्य पारंत्र्याभ्यां भेद प्रतीतेस्तत्रोत्तर श्रुतिस्मृति पुराणवाक्यै र्विरोधमाह इंद्रमित्रं वरुणमग्निमाहुरथोदिव्यः सुपर्णोगरुत्मान्‌ एकं सद्विप्राबहुधावदंत्यग्नि यमंमातरिश्वानमाहुः एकः सुपूर्णः स समुद्र मा विवेश सइद विश्वं भुवनं विचष्टे सुपर्णं विप्राः कवयोवचोभिरेकं संतं बहुधा कल्पयंति इंद्रोमायाभिः पुरुरुपईयते तदिदंभगवान्राजन्नेक आत्मात्मनां स्वदृक्‌ अंतरोनंतरोभाद्वि-[illegible]तंमाययो रुधा सत्वं रजस्तम इति त्रिवृदेक मादौसूत्रं महामिति प्रवदंतिजीवं ज्ञान क्रियार्थ फल रूपतयो रुशक्ति ब्रह्मैवभाति सदसच्चतयोः परंयत्‌ तस्मान्न ह्यात्मनोन्यस्मादन्यो भावोनिरूपित इत्यादि वाक्यै रात्माति रिक्तस्य माया कलिपतत्त्वान्मायोपाधिकृत एव ज्जीवेश्वर भेदस्तद्वत्स्वातंत्र्य पारतंत्र्यमपि विद्याविद्योपाधिकृत मेवन वस्तुतऽ इत्यर्थः एवमेव जीवानां तत्तद्‌देहाभिमानात्पृथक्त्वेन प्रतीयमानानामपि गुण वैषम्यकृत नानात्त्वोपाधिकस्य पारतंत्र्यस्य सावधित्त्वनिरूपणादेकत्त्वं परस्परमभेदत्वं च श्रुत्त्यादि प्रमाणतः प्रत्यक्षसिद्ध मेवकथमित्त्य पेक्षोयांभगवद्वाक्य प्रमाणमाह यावत्स्याद्गुण वैषम्यं तावन्नानात्त्वमात्मनः नानात्त्वमात्मनो यावत्पारतंत्र्यं तदैवहि यावत्स्याद स्वतंत्रत्वं तावदीश्वरतोभया मितिकृष्णोक्ति प्रमाणा नुसधानेन द्वितीया भावा न्नानात्त्वलयाच्च स्वतंत्रः सन्निर्भयो भवतीत्यर्थः पुनर्जीवेश्वरयो भेद दृष्टिं कुर्वतां पुसांभय प्रदर्शनेनत्तयोरभेद दृष्टिं श्रुत्यादि प्रमाणैर्विधत्ते द्वितीयाद्वैभयं भवतीति श्रुतेः आत्मनश्च परस्यापियः करोत्यंतरोदरं तस्यभिन्नदृशो मृत्यु र्विदधे भय मुल्वणं यस्तुभेदं प्रकुरुते स्वात्म नश्च जनस्य च भिन्न दृष्टेर्भयं मृत्यु स्तस्य कुर्वान्न संशयः ज्ञात्वामांचिद्धनं शुद्धं जीव रूपेण संस्थितं तस्मात्कदाचिन्ने क्षेन्न भेदभीश्वर जीवयोरिति श्री राम कृष्ण व्यासा दिवाक्यै र्भेदृष्टिं कुर्वतः पुंसोभय मस्वातंत्र्य च प्रतिपादितं तत्त्वभेद दृष्टे रितिभावः।।१७।।

जीवेकर्तृत्वभोक्तृत्त्वे प्रसज्जतेह्यहंयतैः।।

तदत्ध्यासादनध्यासात्र्य रूपोवतिष्ठते।।१८।।

ननुजीवन्मुक्तानामपिविद्धयनुकूल एव व्यापारोदृश्यते नतु यथेत्थंलोकसंग्रहार्थं दृश्यत्विितिचेत्तर्हि देहाभि मानाद भिवर्धते क्रियाविद्यागताहं कृतित्तः प्रसिद्धयती ति श्री रामवाक्या द्देहानुसंधानं विना क्रियैवनघटे त एवं लोक संग्रहोपि लोके ब्रह्म दृष्टय भावं विना न संपद्यते तस्मात्सर्वत्र ब्रह्म दृष्टीनाम तएव देहाभिमान शून्यानां जीवन्मुक्तानां लोक संग्रहार्थमपि कर्मकरणेकथं प्रवृत्तिः प्रवृत्तौवाकथं कर्तृत्वाद्यभावः संभवतीत्यत आह जीव इति जीवे स्वरूपाज्ञानेनदेहाहंकारवति अहंमते रह मित्यन्यथाबुद्धेः कर्तृत्त्वभोक्तृत्त्वे संसार हेतुभूते प्रसज्जेते प्रसक्ते भवतः कस्मादित्यत आह तदध्यासात् तस्याः बुद्धेः कर्तृत्वादिकं भ्रमणस्वात्मनिविभावनात् जीवन्मुक्तस्तुतस्या बुधे रनध्यासात्स्वात्मत्त्वेना विभावनान्तद्गत मेवकर्तृत्त्वादिकं पश्यन्। स्वात्मन्यमन्यमान स्तूर्य रूपो नारायणादिशब्द वाच्योवतिष्ठते अवतिष्ठत इत्त्यनेनन किंचित्करोती त्यर्थ ननतुर्हि श्री व्यास शुक शंकराचार्यादयो जीवन्मुक्ताः सर्वत्रब्रह्म दृष्टयो न भवंति वा यतस्तेषां विध्यनुकूलकर्मकरणात् पुनर्लोकोपकारार्थं शिष्योपशिष्य परं परयोपदेश संतति प्रवृत्ते स्तत्र भगवद्वाक्ये न सिद्धा चरण माह दोष बुद्धयोभयातीतो निषेधान्न निवर्त्तते गुण बुद्धया च विहितं न करोति यथार्भक इति कृष्णेक्तिः तस्मादु भयानीतो निषेधाचरणाद्दोष बुद्धया न निवर्त्तते किं तु पूर्व स्वभावादे वावद्यं नाचरति पुनर्विहित मपि सत्कर्माचरणं लोको पकारार्थं तत्व ज्ञानोपदेशादिकं च गुण बुद्धयान करोति किंतु पूर्व संस्कारादेव तथा चक्वचित्कदाचिन्मुमुक्षु प्रारब्धे न सिद्धानामप्युपदेशादौमन उत्थितं भवति यथा रहूगण प्रारब्धेनैव जडभर त्तस्यतत्वज्ञानोपदेशे प्रवृत्ति र्नतु स्व प्रयोजन मुद्दिक्ष्येत्यर्थः अन्यथा गुणात्तीत लक्षण निरुपणे वाक्यांत्तर विरोधापत्तेः। वाक्यविरोधोयमेवाह प्रकाशं च प्रवृत्ति चमोह मेव च पांडव न द्वेष्ठि सं प्रवृत्तानिकांक्षति न द्वेष्टय कुशलं कर्मकुशले ना नुषज्जते सदृशं चेष्टं ते स्वस्याः प्रकृते र्ज्ञानवानपि ज्ञाननिष्ठो विरक्तोवामद्भक्तोवानपेक्षकः सलिंगाना श्रमांस्त्य क्त्वा चरेद विधि गोचरः बुधोबालक वत्क्रीडेत्कुशलो जडवच्चरेत् वदेदुन्मत्तवद्वि द्वांगो चर्यां नैगमश्चरेत् शौच माचमन स्नानं न तु चोदनयाचरेत् अन्यांश्च नियमान् ज्ञानी यथा हलीलये श्वर इंत्यादि भगवद्वाक्यैर्ज्ञा निविरक्तभगवद्भक्तानां गुणदोष दृष्टयभावा द्विधि निषेधात तत्त्व सहज सिद्धमेव पुनः श्रूयतेदृश्यते च भागवत धर्म प्रदर्शकानां नारद दूर्वासा वृहस्पत्त्यादीना मन्यथा चरण मतो जीवन्मुक्तासिद्धाः प्राकृतलोकदृष्टया सर्वं कुर्वतीत्यभि प्रायः ननुमास्तु जीवन्मुक्तस्य कर्तृत्वं तथापि कार्य कारण कर्तृत्त्वे हेतुः प्रकृति रूच्यते पुरुषः सुख दुःखानां भोक्तृत्वे हेतु रुच्यते इति भगवदुक्तया पुरुषे सुखादिभोक्तृत्वं प्रसिद्ध मेवकथ मुभय मपि निषेध्यतेतत्राह कार्य कारण कर्त्तत्वस्य जड पर्यवसायित्त्वेनो पाधि प्राधान्यात्प्रकृते

हेतुरित्युक्तं सुखदुः खादिभोक्तृ त्त्वस्यचेतन पर्य वसायित्वेनो पाधि प्राधान्यात्पुरुषोहेतु रित्युक्तं तथा प्युभयमपि कर्तृत्त्व भोक्तृत्वं प्रकृतिनिष्ठ मेवयतः प्रकृत्त्यधिष्ठित स्यैव पुरुषस्यकर्तृत्त्व भोक्तृत्वं न तु केवल नि र्विकल्प कस्येति भावः तस्माद्बुद्धिगत मेवकर्तृत्त्व भोक्तत्वादिकं पश्यन्जीवन्मुक्तः साक्षिमात्रोव्यवतिष्ठत इति फलितोर्थः।।१८।।

**वृत्तेर्लयः कथंस्याच्चेद्वासनाहानिमंतरा।।**

**संगंत्यक्त्वा ब्रह्म भूतोद्वयं तस्य विलीयते।।१६।।**

अत्रयावद्वृतेः सविषयत्वा द्विषयाणाम पिवृत्त्याकर्षण शक्ति त्त्वातयोः परस्पर संबंध परित्यागं विना वृत्तेः स्वरुपे लयस्य दुर्घटत्व विषयकं शिष्य संदेहं स्वयमेवाशंकयत दुपायमाह वृत्तेरिति भुक्तानां पदार्थानां पुन र्भोगेछा वासना तस्याहानिर्नाशस्तामंत रात्तां विनातयैव वासनयाविषयेषु प्रेरितायावृत्तेर्विषयेभ्यः परावृत्त्यपुनः स्वरुपेलयः कथं स्यादि तिशिष्याशंकांमत्त्वा स्वयमेव तद्विश्लेष साधनमाह संगमिति संगंत्यक्त्वा वासना विषय वृत्त्योः संगं परित्यज्य यो ब्रह्मभूतोब्रह्मैव जातः ब्रह्मैवसन्ब्रह्माप्येति श्रुतेः तद्द्वयं विषयाकारेण परिणता वृत्तिस्तन्मूलभूताभोगवासना चोभय मपि स्वरुपेस्वतए वलीयते ननुगुणेष्व विशते चेतो गुणाश्चेतसिच प्रजा; जीवस्य देह उभयं गुणाश्चेतो मदात्मनः गुणेषु चा विशच्चितमभीक्ष्णं गुण एवया गुणाश्चचित्त प्रभवामद्रू पउभयंत्यजेदिति हंस रूपेण भगवता सनकादीन्प्रति मद्रूपः सन्नुभयंत्यजेदित्यादिना जीवस्य देहरूपयो र्गुणचेतसोः परित्याग उक्तः कथंतर्हि भवद्भिः केवलं वासना विषय वृत्योः संग त्याग उच्यते तथासति तत्तन्मूल भूत स्यचित्तस्य विद्यमानत्त्वात्। पुनर्विषय संगजनितबाधः स्यादेवेत्य त आह विषयाकारेण परिणतायावृत्तेः परित्याग एवं विषय परित्याग एवं वासना परित्याग एव चित्त परित्यागः यतोवासनाद्युपाधि परित्यागे न चित्त मेवचैतन्यं भवति पुनर्नैवोत्तिष्ठते तत्र प्रमाणमाह चित्तं ब्रह्म सुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् क्षयेसं कल्पजालस्य जीवोब्रह्मत्त्वमाप्नुयात् मनोब्रह्मेति साम्नात् इति श्रुत्यादि वाक्यैः सर्वसंकल्पक्षयेन एवं ब्रह्म भवति तस्माद्देहोपाधिकृत एव भवोनान्यथेत्यत्र दृष्टांत पूर्वकं प्रमाणमाह स्नेहाधिष्ठान वर्त्यग्नि संयोगोयावदीयते तावद्दी पस्य दीपत्त्वमेवंदेहं कृतोभव इति शुक वाक्यात्स्नेहाद्युपाधि मंतरादीपस्य महा भूततैवचतुर्विध देहो पाधिं विना जी वो ब्रह्मै वेतिभावः।।१६।।

**जलोद्भवेजलेस्यांतः स्यात्सिंधु सयथैवहि।।**

**वृत्त्युद्गमे तथा वृत्तेर्लयो ब्रह्म सनातनं।।२०।।**

पुनरहंवृत्तेर्लय संभावनेन चित्तस्यब्रह्म तामापादयितुं दृष्टांत प्रदर्शनेनश्लोकांतरमाह

जलोद्भव इति यथा जलस्य नद्याः मूलभूतनिर्झर रूपस्योद्भव उत्पत्ति र्य स्मात्तस्मि न्जलोद्गम स्थाने जलस्य प्रबाह रूप स्यांतः लयः पर्यवसान मितियावद्य दित्या द्भवेत्तर्हि सजलनिर्झरोहीति निश्चये न सिंधुरेवस्यात् स्यादिति पदमुभयत्र काकाक्षि वत्संबध्यते एवं दृष्टांत्तमुक्त्वा दार्ष्टां तमाह वृत्त्युद्गम इति तथाऽहं वृत्ते रुद्गमो यस्मान्नि मित्त भूतात्तस्मिन्न धिष्ठाने ब्रह्मणित्तस्या वृतेर्ल याद्देहा द्यनुसंधानं विस्मृत्त्य स्वरुपाकारता संपादनात् सनातनं पूर्व सिद्धं ब्रह्मैवा वशिष्यत इति शेषः अत्रेदंनिर्णीतं चित्तमेव वृत्ते र्विषया कारतां परित्यज्य ब्रह्मा कारता मापाद्यस्वयं निर्विषयं निराश्रयं सच्चिदेव भवति यथाकर्पूर दीपः कर्पूर स्थं काठिन्यादि पृथ्व्यंशं दग्ध्वातेजोरुप तामापाद्य स्वयं महाभूतता माप्नोति तद्वच्चित्त चैतन्यं भवतीत्यर्थः उपाधि लयेनस्वतः सिद्धांब्रह्मप्राप्तिं शुकोऽप्याह घटेभिन्ने यथा काश आकाशः स्याद्यथापुरा एवं देहे मृतोजीवो ब्रह्म संपद्यते पुन रितित स्मान्मनोमात्र विलसिते देहे मृतेतत्त्व ज्ञानेनलीने सति जीवोब्रह्म संपद्यते प्राप्नोति यथाछटो पाधौविनष्टे घटाकाश एवमहदा काशः स्यादितिभावः।।२०।।

**बुद्धिनौकाश्रितोलोकः करोति चगमागमं।।**

**तांत्यजन्त्स्या ज्जलेनीलीऽनीहोब्रह्मणि लीयते।।२१।।**

ननुयतोयतोनिवर्तेत विमुच्येतततस्ततः एषधर्मोनृणां क्षमः शोक मोहभयापहः सर्वेमनो निग्रहलभक्षणांताः परोहियोगोमनसः समाधिः ध्यानेनेत्थं सुतीव्रेण भुंजतोयोगिनोमनः संयास्यत्त्याशुनिर्वाणं द्रव्यज्ञान क्रिया भ्रमं इत्यादि वाक्यै भगवतासर्वकर्मपरित्यागे नकेवलं मनोयुंजतोयोगिनोद्रव्य ज्ञान क्रियाभ्रम आशुनिर्वाणं यास्या तीति निर्णीयकैवल्य प्राप्तेर्जयतप आदि साधनं विनापिसुलभत्वं द्योतितं पुनस्तद्यथेह कर्म जितोलोकः क्षीयत एव मेवामुत्रपुण्य जितोलोकः क्षीयते ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोके विशंति एवंत्रयी धर्ममनु प्रपन्नागता गतंकाम कामालभंते श्रुतं चदृष्टवदुष्टं स्पर्धा सूयात्ययव्ययैः बव्हंतरायकामत्वात्कृषिवच्चापि निष्फल मित्यादिनां भगवतै वकामकामानां सुखं क्षणिकत्वेन तुच्छत्वान्निषेधितं एवं विद्वानपिलोकः कम्नभिप्रायमाश्रित्य प्रवृत्त कर्मणि प्रवृत्तः सन्गमागमं करोतीत्यत्राह बुद्धिनौकेति तत्र बुद्धिस्तुद्विविधा एका व्यवसायात्मिकाऽन्या बहु शाखाविषयवत्यनंताच तत्र प्राक्त्तन मलिन संस्कार वशात्प्रवृत्त स्वभावोलोकस्तां विषय वतीं बुद्धि नौका रूपामाश्रितस्तादात्म्येनतदधीनः सन्गमागमं करोति सत्यलोकांतं गत्वा पुनः पुण्यक्षये, पातालमपि प्रविंशति यतः क्षीणपुण्यं तत्सर्वमनित्छन्काल चालितः आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोर्जुनेत्त्यादिभगवदुक्तेः।

यद्यपि ब्रह्म लोकं गतानां पुनरावृत्ति र्नास्ति तथापि कर्तृत्त्वाभि निवेशान्पुण्यातिरेकेण गतानां सकामानां पुन रावर्त्तनं मोक्षस्या ति दुर्लभत्त्व सूचनस्य कृष्णेनोक्तं बुद्धे र्नौका साम्यं तुतन्निष्ठस्य पराधीनत्वद्योत्तनाय यथाकश्चिन्मलिन शरीरः पुनर्निदाघतापतमो गंगांभसि देहं निर्मलं शीतं शांतंकर्त्तुंगतः परंतु प्रारब्ध वशात्तत्तीर स्थां नौकां विहर्त्तुं गुण बुद्धयाश्रितः पश्चात्तदधीनः सन्वायुवशाद्बहुभ्रमणं कृत्त्वापुन रधिकं संतपृक्तस्तां नौकां त्यक्त्वा जले लीनः सन् शांतोभवति एवं मुमुक्षु रपि विषय सुखेच्छया लोकोल्लोकांतरं ब्रह्मजन्बहु भ्रमणेन श्रमं प्राप्तः पुनस्त त्तल्लोकस्यक्षयानुसंधाने नो परतिं प्राप्य पश्चाद्भगवत्प्रोक्ता मेकांव्यवसाया त्मिकां बुद्धि माश्रित्यन्निरीहोनिष्क्रियो निर्वासन श्चसन्स्वरूप भूते ब्रह्मणि लोयते, यतः सुखमस्या त्मनोरूपं सर्वे हो परतिस्तनुरिति नारद वचनात् ननुयावज्जीवमग्नि होत्रं जुहोति शांतोदांतः पुनर्नैक र्मणा मनारंभान्नैष्कर्म्यं पुरुषोश्नुते नच संन्यसनादेवसिद्धिं समधिगछति तयोस्तुकर्मसंन्यासात् कर्मयोगोविशिष्यते यज्ञदानतपः कर्मन त्याज्यं कार्यमेवतत्। यज्ञोदानं तप श्चैवपावनानिमनी पिणां अनाश्रितः कर्मफलं कार्यं कर्म करोति चः स संन्यासी च योगी च न निरग्निर्नचाक्रियः नहि कश्चित्क्षणमपिजात्तुतिष्ठत्त्य कर्मकृत् कार्यते ह्यवशः कर्मसर्वः प्रकृतिजैर्गुणैः मोक्षार्थीन प्रवर्तेत तत्र काम्य निषिद्धयोः नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासये त्यादिश्रुतिस्मृति पुराणवाक्यै र्मोक्षार्थिनामपिं काम्य निषिद्ध परित्त्यागेन नित्त्य नैमित्तिकयोरावश्यकत्वात्कथं सर्वतोऽनीहत्त्वं संभवति तथा च सतिज्योतिष्टोमादीनां काम्यत्त्वेपिसंयोग पृथकत्व न्यायेन नित्यनैमित्तिकांतर्गत त्वात्तद करणे प्रायश्चितविधानाच्चित्तशुद्धि द्वारा मोक्षोपयोगित्वाच्चयज्ञदाना दिकर्माण्यवश्यकर्तव्यतयाविधेयानितर्हि कथमुच्यतेऽनीहो मणिलीयत इति तत्राह सत्यमिदं तथाप्येता नि साअन्य वाक्यानि, उत्कट कामानां हिंसादिरागाणां, क्षात्रादिघोर प्रकृतिस्थित्तानां, प्राशस्त्य मात्रबोधका नि, तदेवाह एवं कामाशयं चित्तं कामाना मति सेवया विरज्येत यथाराजन्नाग्नि वद्धुत बिंदुभिरित्यादिना कामाना मति सेवापि काम कश्मल चेतसां प्राशस्त्यश्चात्र बोधिका अन्यथा सिद्धांत वाक्य विरोधापत्तेः विरोधमेवाह न जातु कामः कामाना मुपभोगेनशाम्यति हविषाकृष्ण वर्त्मेवभूय एवा भिवर्धते तथा कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह दुर्लभंमानुषंजन्म तदप्य ध्रुव मर्थदं न कर्मणान प्रजयेत्या दिवाक्यैः कौमार दशाया मेवाहिंसा प्रधानान्भागवतान्धर्मा नाचरेत् एवमेव भगवतार्ज्जुनं प्रतिघोर प्रकृतेः सामर्थ्यंः प्रतिपादितं कथमित्त्यतआह यदहं कारमाश्रित्य नयोत्स्य इति मन्य से मिथ्यैवव्यवसायस्ते प्रकृति स्त्वां नियोक्ष्यति स्वभावजेन कौं तेय निबद्धः स्वेन कर्मणा कर्त्तुं नेचत्छसि, यन्मोहात्करिषयस्य वशोपित

दित्यादिना घोर प्रकृति मुपेयुषः पुरुषस्य क्षणिक मुत्पन्नंदयादिभावं पराभूयसा घोर प्रकृति रेव युद्धादिष्वेवोत्सा हितं करिष्यत्ये वेति ज्ञात्वा भगवताऽर्जुनं प्रतियुद्धा दिक मैवोपदिष्टं एवमेवहिंसादि रागाणामन एवकामिनां हिंसा प्रधान मेवकर्मवेदेनोपदिष्टंतवेदाह हिंसायां यदिरागः स्याद्यज्ञ एव न चोदनेत्यादित स्माद्रागिणां नियमद्वाराऽभ्यनुज्ञामात्रंक्रियतेन तुचोनाप स्तेषां रागतो नित्यप्राप्तत्वादन्यथा भारतेय ज्ञादिकर्मोपदेष्टारं पितरं प्रत्यायुषः क्षणिकत्वज्ञाना द्विवेकिनामेधा विनाम्ना पुत्रेण तथागवालंभे विचख्युराज्ञाच तथा भागवते नारदेन चक्रियमाण हिंसा निषेधोन स्यात्त मेवनिषेध माह आलंभ यज्ञाः क्षत्राश्चहविर्यज्ञाविंशः स्मृताः परिचारयज्ञाः शूद्राश्च तपोयज्ञाद्विजातयः इति स्मृत्त्या ब्राह्मणानां तपोयज्ञस्यैव प्राधान्यात्। पशु यज्ञैः कथं हिंस्त्रै मादृशो यष्टुमर्हति अंतवद्भिरिवप्राज्ञः क्षत्रयज्ञैः पिशाचवत् अव्यस्थित मर्यादै र्विमूढै र्नास्ति कैर्नरैः संशयात्मभि ख्यक्तै र्हिसा समनुवर्णिता यदियशांश्च वृक्षांश्च यूषां श्चोद्दिश्य। मानकरः वृथा मांसानि खादंति नैष धर्मः प्रशस्यते सर्वकर्म स्वहिंसां हि धर्मात्मामनु रब्रवीत् कामकाराद्विहिंसं तिबर्हिर्वेद्यां पशून्नराः सुरांमत्स्यान्मधु मांस मासबं कृस रौदनं धूर्त्तैः प्रवर्तितंह्येतन्नैत द्वेदेपुकलिपतं विष्णु मेवाभि जानं ति सर्व यज्ञेपु ब्राह्मणाः, पायसैः सुमनोभिश्चतस्यापि यजनं स्मृतं स्वाहा स्वधामृतभुजोदेवाः सत्त्यार्जव प्रियाः क्रव्यादात्राक्षसान्विध्धि जिह्वा रस परायणान्।।

यज्ञियाश्चैयेवृक्षावेदेषु परिकल्पिताः यच्चापि किंचित्कर्तव्यमंत्र चोक्षैः सुसंस्कृतं महत्तसत्त्वैः शुद्धभावैः सर्वदेवहिमेवतत् तस्मातप्रमाणतः कार्योधर्मः सूक्ष्मोविजानता अहिंसासर्वभूतेभ्यो धर्मेभ्यो ज्यायसीमता। अहिंसापरमो धर्मस्तथाऽ हिंसा परंतपः अहिंसापरमं सत्य यतोधर्मः प्रवर्तते। यथा नागपदेऽन्यानि पदानि पदगामिनां सर्वाण्येवामि धीयंते पदजातानि कौंजरे। एवं सर्वमहिसायां धर्माख्यमपि धीयते अमृतः सनित्यं वसतियो हिंसा सा न प्रपद्यते न भूता नाम हिंसा याज्यायान्ध र्मोस्वि कश्चन पापानुबंधिय त्कर्मयद्यपि स्यान्महाफलं त्तत्र सेवेत मेधावी शुचि र्ह्य कुशलं यथा हिंस्त्रद्रंव्यभयंकाम्य मग्नि होत्राद्य शांतिदं हिंसा विहाराद्यालब्धैः पशुभिः स्व सुखेच्छया यजंते देवता यज्ञैः पितृभूतपतीन्खलाः। द्रव्ययज्ञैर्यक्ष्य माणं दृष्टवा भूतानि बिभ्यति एषमाकरुणोहन्यादन तज्ज्ञोह्य सुतृप् ध्रुवमिति श्री नारद व्यासादिभि हिंसा प्रधानं कर्म निषेधितं नन्वग्नीषोमीयं पशुमालभेत तथा च वायव्यं श्वेत माल भेतेत्यादि विधिना आलभनं नाम देवतो द्देशेन पशुहिंसनं तत्तुविहित मेवयतो यावेद विहिता हिंसान साहिं से तिकीर्त्यत इति स्मरणात्तर्हि किमर्थासाहिंसेत्तिःपुनः पुनः ज्ञाप्यते अत्रैतदपि निराकर्त्तुं देवतो द्देशेनापि कृताया हिंसायाः परिणामं नारद वाक्ये नाह भोभो प्रजापते

राजन्पशून्पश्चत्वयाध्वरे संज्ञापिता जीव संघान्निर्घृणेन सहस्त्रशः एतेत्त्वां।

संप्रतीक्षं तेस्मरंतो वैशसंतव संपरेतमयः कूटै श्छिदं त्युत्थितमन्यव इति प्राचीन बर्हिषेनारदेन योग सामर्थ्यात्प शून्दर्शयित्वोक्तं पुनरपि मांस भक्षयिता मुत्र यस्य मांसमिहाम्यहं एतन्मांसस्य मांस त्त्वं प्रदंति मनिषिण इत्यादि वाक्य वला दु्देवतो दु्देशेन कृताहिंसाप्य हिंसा इदमपि प्राशस्त्यमात्र बोध कमन्यथा यज्ञातंर्गत हिंसादोप निरासार्थं प्रायश्चित्त विधान मपि न स्यात् पुनः सर्वेपां प्रवृत्तनिवृत्तकर्माधि कारिणामप्य यंवक्ष्य माणहिंसा निपेधश्च न स्यात्कथ मित्य पेक्षायांत न्निपेधमाह नदद्यादामिपं श्रांद्धे न चाद्या द्धर्मत्तत्त्ववित् मुन्यन्नैः स्यात्परा प्रीति स्तथा नपशुहिं सयेत्यादिवाक्या द्धारते पितृणामे कादधिक मेकंतृप्तिजनकं छागमृग वराह महिप मांसादिकं श्राद्धेपितृन्नुद्दिश्य दातव्यमिति विहितं तत्तपितृ देवताकमहिंसा प्रापकं चेतर्हि किमर्थं निपिध्यते एवं ग्रहयज्ञेपिकेषां चिद्ब्रहाणां विहितमपि मांस वलिं शिष्टैर्निषिद्धं ब्राह्मणादी नामहिंसाधर्मस्य प्राधान्या त्तत्र मापादिबलिरेव कल्प्यते नन्वस्तुनाम ब्राह्मणा नाम हिंसा साधर्म प्राधान्यं परंतुक्षत्रियादि त्रिवर्णानां गृहयज्ञ मृगया दिषु हिंसाया विहितत्त्वा त्किमर्थं ब्राह्मणादी नामित्युच्यते अत्र सर्वेषामप्यहिं साधर्म प्राधान्यं भगवद्वाक्य प्रमाणमाह अहिंसा सत्य मस्तेयमकाम क्रोध लोभता भूतप्रियहिते हाच धर्मोयं सार्ववर्णिक इति तस्मादेतत्त्व्यतिरिक्तः कामतः कृतः सर्वोपिधर्मः सर्ववर्णा नामधर्म।

एवेतिज्ञेयः एवंवेदेपियावत्प्रवृत्तं कर्मतावत्हिंसा प्रधानमितियास्केन निरुक्ते प्रतिपादितं तद्यथा अथयेहिंसा माश्रित्यविद्यामुत्सृज्य महत्त पस्तेपिरेचिरेण वेदोक्ता निवाकर्माणि कुर्वंति ते धूममभि संभवंति धूमाद्रात्रि मित्यादि नागत्वा चांद्रमसंलोकं सोमपाः पुनरेष्यतीत्यभे प्रेत्यतस्य संक्षये पुरेवेमंलोकं प्रतिपद्यत इत्यंतेनग्रंथेन हिंसा प्रधानं वेदोक्त मपि कर्मभोगांतेऽधः पात प्रदत्वा न्नित्य सुखेप्सुभिः सर्वथात्याज्यमेवेति सूचितं ननुनित्य सुख प्राप्तेः पूर्वस्वर्गादि सुख भोगे को बाधस्तत्राह कोन्वर्थः सुखं यत्त्वेनं कामोवामृत्युरंतिके आघातं नीयमानस्य वध्यस्ये वनतुष्टिद इति कृष्णोक्तेवधार्थं नीयमानोऽजोऽजां भुनक्तितद्वदयं मूढोपिभुनक्ती तिभावः पुनर्वेदोक्त निवृत्ति प्रकारमाह अथयेहिंसा मुत्सृज्य विद्यामाश्रित्य महत्त पस्तेपि रेज्ञानोक्तानिवाकर्माणिकुर्वंति ते चिंरभिसंभवेत्य चिंषोहरन्ह आपूर्यमाणं पक्षं मित्यादि ना ब्रह्म लोकमभि संभवंतितेन पुनरावर्त्तंत इत्यंतेन ग्रंथे नहिंसा परित्यागेन ज्ञानोक्तकर्म कर्तृणां मर्चिरादिमार्गेण ब्रह्मलोकप्राप्तेः पुनरपि ब्रह्मणा सहते सर्वे संप्राप्ते प्रतिसंचरे परस्यांते कृतात्मानः संविशंतिपरं पदं प्रवृत्तिः पुनरावृतिर्निवृतिः परमागतिः तांगतिं परमामेति निवृत्ति परमोमुनिः प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकं आवर्तेत प्रवृत्तेननिवृतेना श्नुतेऽ

मृतमित्यादिवाक्यैस्तेषां परम पद प्रवेशः सूचितः अतः कर्म प्रवृत्तं चनिवृनिमप्यृतं वेदेविविच्योभया लिंगमाश्रितं विरोधित द्यौगपदैक कर्त्तरिद्वयं तथा ब्रह्मणिकर्मनर्छमीति सती वाक्यात्प्रवृत्त निवृत्तात्मा रामाणां वेदेनापि पृथग्विधाधिकारा निरूपिताः अतएव यदहरेव विरजेत्तदहरे वप्रव्रजे तू तथा तावत्कर्माणि कुर्वीतन निर्विद्येतयावत्तामत्कथा श्रवणादौ वाश्रद्धायावन्नजायते निवृत्तं कर्मसेवेत प्रवृत्तं मत्सपरस्त्यजेत् जिज्ञासायां सं प्रवृत्तोनाद्रियेत्कर्म चोदनामित्यादि वाक्यै विरक्तभक्त जिज्ञासुना मपिकर्माधिकार शंकानास्ति किं पुनर्योगा रूढस्येतिभावः नन्वथाग्रे ऋषयः कर्माणी हंते कर्महि तव ईहमानोहि पुरुषः प्रायोनीहां प्रपद्यत इति स्वायंभुत्व स्य मनोर्वाक्यादीहां विनाऽनीहत्त्वं कथं सिद्धयेत्तत्राह कर्मणाकर्म निर्हारोनबाह्यात्यंतिक इष्यते। अविद्वदधिकारित्त्वात्प्रायश्चितं विमर्शनं नैकांतिकः प्रतीकारः कर्मणां कर्मकेवलं द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ, कर्मत्वेके प्रशंति स्वल्प बुद्धि तरानराः। तेनमे देहजाला निरमयंत उपासते कर्मणावध्यतेजं तुर्विद्यया च प्रमुच्यते तस्मात्कर्म न कुर्वंति यतयः पारदर्शिनः येनु बुद्धि परां प्राप्ताधर्म नैपुण्य दर्शिनः न ते कर्म प्रशंसंति कूपं नद्यां पिबन्निवकर्मणः फल माप्नोति सुख दुःखेभवाभवौ विद्यया तदवा प्नोति यत्रगत्वानशो चंति हित्त्वागुण मयं सर्वं कर्महित्वा शुभाशुभं उभेसत्यानृतेत्त्य क्त्वा चैवं भवति निर्गुणः बुद्धि युक्तो जहातीह उभे सुकृत दुःष्कृत इत्त्यादि वाक्यै रूभय कर्म परित्याग एव बुद्धि युक्तस्य सूचितः तस्माज्ज्योतिष्टो माद्य करणेयत्प्रायश्चित्त विधानं तदप्यविद्या व द्विपयकमेवयतोऽ विद्या वद्विपयोवेदइतिशिष्टैः प्रति पादनात् श्रूयते च बह्वचब्राह्मणे प्रायश्चित्त विधान मधिकारि भेदान्न तु सर्वेषामेवतद्यथस्तदा हुर्यस्य गार्ह पत्याहवनीया वंतरेणानोवारथो वाश्वावाप्रतिपद्येत कातत्र प्रायश्चित्तिरिति नैतन्मनसि कुर्यादित्याहुरात्म न्यस्यहिताभवं तितिच्चेन्म नसि कुर्वंति गार्हपत्याद विच्छिंना मुदक धारा हरेत्तुं त्तुं तत्वन् ज सोभानु मन्विहोत्या हवनीयात्सात्तत्रप्रायश्चितिरितिश्रुत्याकेवल देहात्म बुद्धया अन आदिषु दोष दृष्टीनाम त्रोक्तं–

प्रायश्चितं विहितं नान्यस्य यतोऽस्यात्मनिस्वरुपेताः तानि अन आदीनिव्यापकत्वाद्धवंत्ये वेतिभावः पुनरीहमानोहि पुरुषः प्रायोनीहां प्रपद्यत इत्यत्र प्रायः शब्द प्रयोगान्नतुसर्वेषामेव कर्माधिकारः किंत्व निर्विष्यचित्तानां कामिना मेवेत्यर्थः ननू भाम्या मेव पक्षाभ्यां यथा खेपक्षिणांगतिः तथैवज्ञान कर्मभ्यां प्राप्यते ब्रह्माश्वतमिति शाश्वतीमारितिति पाठान्तरमपि। वाक्या दुभयमपि ब्रह्म प्राप्ति साधनमस्ति किमर्थ माग्रहेण निषिद्धय तेतत्राह उदेतिक र्माखिलकारका दिभि निहिंति विद्या खिल कार कादिकं तस्मात्त्यजेत्कार्य मशेषतः सुधी र्विद्याविरोधान्न समुच्चयोभवेत् अज्ञान मेवास्य

हि मूलकारणंतध्यानमेवात्र विधौ विधीयते विधैवतन्नाश विधौ पटीयसी नकर्म तज्जंस विरोध मीरितमिति श्री रामो तया तथा ज्ञानं विशिष्टं न तथा हियज्ज्ञाने न दुर्गं तरते न यज्ञैरिति स्मृत्या चकर्म विद्ययोरेक स्मिन्नधि करणेपरस्पर विरोधेन युग पद संभवात्स समुच्चय वादिनां पक्षं परित्यज्य मुमु क्षुणांविधाभ्यास एव सर्वथा प्रयत्नःकार्य इति भावः ननुमास्तु।

विद्याभ्यासवतां प्रवृत्त कर्माधिकारः परंतु तत्साधनभूत निवृत्तकर्म विना विद्योत्पत्ति रेवकथंस्यादित्यत्राप्रज्ञान माशयं च भगवच्छरणं विना न सिद्धयेदित्यभि प्रेत्याधिकारिणा मनधिकारिणां सर्वेषामपि प्राणिनां सकल साधनेभ्यः श्रेष्ठं श्रीराम कृष्णव्यासादि सम्मत मुपायमाह सकृदेव प्रपन्नायतवास्मीति चयाचते अभयं सर्वभूतेभ्यो ददाभ्येत द्व्रतं मम, दैवी ह्येषा गुणमयी मम माया दुरुत्त्यया मामेवये प्रपद्यंते माया मेतां तरंतिते मन्मनाभव मद्भक्तो मद्याजी मां नमस्करु मामेवैष्य सिसत्त्वं ते प्रतिजानेप्रियोसि मे/सर्व धर्मान्परित्यज्य मामेकं शरणं ब्रज अहंत्त्वासर्वपापेभ्यो मोक्षयिष्यामिमा शुच 'तस्मात्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनां प्रवृत्तंच निवृत्त च श्रोतव्यं श्रुतमेव च। मामेक 'मेव शरण मात्मानं सर्व दे हिनां या हिसर्वात्मभावेन मयास्यात्द्य कुतो भयः अथतं सर्व भूतानां हृत्पदमेषु कृतालयं श्रुतानुभावं शरणं व्रज भावेन भामिनीत्यादि श्रीरामकृष्ण कपिलादि वाक्यैः सर्व देहिनांतर्यामिण मात्मान मेकं ज्ञात्वा कर्तृत्त्वादि परित्याग पूर्वकं सर्वात्मभावेन शरणं भजतां येषां केषां चिज्जीवानां कालादिभ्यो निर्भयत्त्वं मायातरण मात्म विज्ञानं चानायासेन भवतीति प्रकाशितं नान्येषा मितिभावः पुनर्भजतानी हयोत्मानमनीहं हरिमीश्वर मिति प्रल्हाद वाक्यात्सर्व धर्म परित्यागेन निष्क्रियत्त्वमेव सूचित मतोनीहो ब्रह्मणिलीयत इत्त्युचित मेवोक्त मितिभावः।।२१।।

**न सूत्रव्यतिरेकेण पट संस्था प्रदृश्यते।**
**तथा ब्रह्मातिरेकेणनहि विश्वं प्रतिष्ठितं।।२२।।**

ननुभगवच्छरणानां निरीहत्त्वान्मायातरणं कालादभयमात्म विज्ञानं च सुलभ मित्युक्तं तर्हितेषामपिमनस श्चांचलयादादेहांतं सुख दुःखादि साक्षात्वारो दृश्यते अस्तेषां सद्य एव निरीहत्त्वं निर्भयत्त्वं च कथं संभवतीत्यत्र दृष्टांत पूर्वकं श्लोक द्वेयनाह न सूत्रेति भगवच्छरण नामत एव ब्रह्म निष्ठानां सुखदुः खादसाक्षात्कार जनकं मन आदि सर्वं विश्वं ब्रह्मा तिरेकेण ब्रह्मणः पृथक्त्वेन न प्रतिष्ठितमेव हीति निश्चितं यस्मात् यत्किंचेदं प्राणि जंगमं च पतत्रिच यच्च स्थावरं सर्वंतत्प्रज्ञा प्रतिष्ठितं प्रज्ञानेत्रोलोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्मेति यत्पुरुषेणहविषादेवा यज्ञमतन्वत ब्रह्मार्पणंब्रह्म हविर्ब्रह्माग्नौ

ब्रह्मणा हुतं ब्रह्मैवतेनगंतव्यं ब्रह्म कर्म समाधिना। हर्विदाताह रिर्भोक्ता हविरन्नं प्रजापतिः हरिर्विप्र शरीरस्थो भुंक्ते भोजयते हरिः वासुदेवात्परोब्रह्मन्नचान्योर्थो स्तित्तत्त्वतः वस्तुतो जानतामत्र कृष्णंस्था चरिष्णु च भगवद्रूपम परं नान्य दस्तीह किं चनेति श्रुति स्मृति पुराण वाक्यै रभेद दृष्टीनां तेषां भासमान सुखदुःख काम क्रोधादी नामपि भगवद्रूपत्वा नु संधानादत्त एव त्याग सूत्रव्यतिरेकेण पद्द्वये भोग रहितानां निर्भयत्वादिक मुपपन्न मेवतावद्रागादयस्ते नास्तावत्का राग्रहं गृहं तावन्मोहों घ्रि निगडोयावत्कृष्णन ते जनाइति ब्रह्म वाक्येन भगवत्छ रणानां रागादिसद्भावेपि भेद तुष्टय् भावे नबंधनाभावः सूचितः एवमेवन्तः तुमात्रो भवे देव पटोयद्व द्विचारितः आत्मतन्मात्रमेवेदं तद्व द्विश्वं विचारित मित्यष्टावक्र वाक्या द्ब्रह्मा तिरेकेण विश्वस्या प्रतिष्ठित्तत्त्वं प्रदर्श्य दृष्टांतं विवृणोति सूत्रव्यतिरेकेण ओतप्रोत सूत्रं विना पट संस्था स्वातंत्र्येण पट स्थिति नैंव प्रदृश्य ते किं तु केवलं पटस्थादावंते मध्ये च सर्वं यथा सूत्रं तद्वद्विश्वस्याप्यादावं ते मध्ये च सर्वं ब्रह्मैवेति ज्ञाना द्भगवच्छरणा नां नभयशंकेति भावः।।२२।

**वीजांकुरस्कंध शाखापत्र पुष्पैर्यथातरुः।।**

**तथैवाद्वैत वस्त्वेकं कार्य कारण शक्ति धृक्।।२३।।**

पुनर्दृष्टांत पूर्वकं वस्त्वद्वितीयतामाह बीजां कुरेति यथाबीजं अंकुरः स्कंधाः शाखाः पत्राणिपुष्पाणि चेत्यादि शब्दै खयव शोह्येक स्तरुरेव निगद्यते तथा कार्य कारण शक्ति धृक् कालमायांश विलसित कार्य कारणाद्यनेकशक्ती धारयतीतिधृगपि अद्वैतवस्त्वेकमेव तस्मादनेकत्वेन भासमाने ष्वपि पदार्थेष्वेक त्वं व्याप्त मित्यर्थः। पुनः प्रमाण मप्याह ज्ञानमात्रं परंब्रह्म परमात्मेश्वरः पुमान दृश्यादिभिः पृथग्भावै र्भगवानेक ईयते एकएव परोह्यात्मा सर्वेषामपि देहिनां नानावगृह्यतेमूढैर्यथा ज्योतिर्यथानभ इत्यादि वाक्यैर्मायोपाधि भिर्दृश्यादिभावैर्नानात्वेन प्रतीयमानोपि ज्ञानिनामेक एव प्रतीयते यथा जलपात्रोपाधि कृतं सूर्यनिकत्वं मूढैरेव प्रगृह्य–

ते यथा च व्यापकस्य नभसोघट मठाद्युपाधिकृतं व्याप्यत्त्वं तथा परमात्मनोपिपरिच्छिवन्नत्वंनानात्त्वं चमायोपाधि कृतं मूढैरेवसत्य त्त्वेनांगी क्रियते तस्मात्तेषामेक स्मिन्स्वरूपे नानात्त्वज्ञानेन द्वितीया भि निवेशात्कालादिभयं नित्त्य मेव द्वित्तीया द्वैभयं भवतीति श्रुतेः भगवच्छरणानां तु माया तरणा द्भगवन् व्यतिरिक्त द्वितीयाभिनिवेश वे वाऽभिन्न दृशां तेषां नकालादिभय मित्यर्थः।।२३।।

**बिहाय नामरुपेऽयं हृदिहं संविबुद्धय च।।**

**यदा ना हंतदासोहं विना शब्दं विभासते।।२४।।**

ननु केचित्सोहं शिवो हंसाच्चिदानंद स्वरुपोहं मुक्तोहमिति भावये दिति भावना विधिं परित्यज्य केवल मंत्रोच्चारण मेव कुर्वंति तेषा मनेनैवात्म प्रकाशः प्रतीयते वा नेत्यत्र विभावनां विना नैवात्मा प्रकाशत इत्त्यभिप्रायेणाह विहायेति अहं जीवो गुरूपदेशतोऽतन्निरसनेन नाम रूपे विहाय व्राह्मणोहंक्षत्रियोह मित्यादि नाम गौरोहं सुंदरोहं पुष्टो हमित्त्या दिरुपंचते उभेऽपि परित्यज्य पश्चाहृदि मंनसि हंसश्रद्धंत्वं पदार्थं तत्पदार्थतामापन्नं शिवोहंस सच्चिदानंद स्वरुपो हमित्या दिशब्दानां लक्ष्यार्थ भूतं विबुद्धया भेद भावनया विशेपेण ज्ञात्वा यदानाहं देहादि रुपोनास्मीति भवति कथमित्य पेक्षायां सिद्धानु भव वाक्य प्रमाणमाह यदानाहंत्तदामोक्षो यदाऽ हं बंधनं तदा मत्त्वेति हेलया कंचिन्मागृहाण विमुंचमा तथानाहं मनुष्यो नच देव यक्षो न ब्राह्मण क्षत्रिय वैश्य शूद्रः नब्रह्मचारी न गृही वनस्थो भिक्षु र्नचाहं निज वोधरुप इत्यष्टावक्र हस्तामलक वाक्येन बोध पारोक्ष्य निवृत्त्याऽह मोप्यनवकाशात्केवल बोध एवावशिष्यते तदा सोह मित्त्यादिशब्दं विनापिसोहं शब्द लक्ष्यार्थः परमात्मा विभासने विशेषण भाति यत स्तस्यास्तिभाति प्रिय रूप त्त्वान्नान्यत्तत्रा वशिष्यत इत्यर्थः। गुरु पदेशतो ज्ञात्वेत्युक्तं तत्र गुरूपदेश पद्धत्तिं श्री सनक नारदादि संप्रदायेनाह–तत्त्वं नरेन्द्र जगतामथ तस्तु पांच देहे न्द्रिया सुधिषणात्मभिरावृतानां यः क्षेत्र वित्तयत याहुदि विष्वगाविः प्रत्यक् चकास्ति भगवांस्तमवेहि सोस्मि अहं भवान्नचान्यस्त्वंत्वमेवाहं विचक्ष्वभो ननौ पश्यंति कवय श्छिदं जातुमनागपि यथा पुरुष आत्मान मेक मादर्श चक्षुषोः द्विधाभूत मवेक्षेत्ततथैवां तरभावयोः हंसावहंच त्वं चार्य सखायौ मानसायनौ अभूतामंतण्यं कः सहस्त्र परिवत्सरा नित्त्यादि वाक्यै र्जीवेश्वरयो रभेदभावनयात्वं पदार्थ शोधनात्स्वयं ज्योतिष्ट्वां पूर्व सिद्ध मेव नूतन प्राप्त मिव भासत इत्यर्थः।।२४।।

**नादोदुंदुभि संभूतो दुंदुभिसंभूतोदुं दुभिंलक्षयत्यसौ।।**

**ब्रह्मभूतस्तथोंकारः स्वाश्रयं दर्शयत्यलं।।२५।।**

पुनरथोमित्येकाक्षरं ब्रह्म व्याहरन्माम नुस्मरन यः प्रयातित्य जन्देहं सयाति परमांगति मिति भगवद्वाक्यादों कारोपासन मपिब्रह्म प्रापक मिति सदृष्टांत माह नादइति असौ दुंदुभिसंतोनादः श्रवणक र्तृणां स्वाश्रयं दुंदुभि मेवयथालक्षयतिलक्षीक रोतिलक्ष्यं कारयतीति भावः ननु दुंदुभेरपि नादोदंड ताडनं विना न संभवति अतोदंडताडन तत्क्रर्त्रोरपि लक्ष्यता वच्छेदकत्त्वात्कथं केवलं दुंदुभि मेवलक्ष्यति तत्राह सत्त्यं तथा पिदंडत्ताडन तत्कर्त्रोः केवलं निमित्तत्त्वा दुंदुभेस्तुनादोत्पत्ति लयाश्रयत्वेन मुख्यत्त्वाद्दुद्देश्यता विधीयत्त्वे न दुंदुभिमेवलक्षयत्तीत्यर्थः एवंदृष्टांतं विवृत्त्यदार्ष्टांतं विवृणोति ब्रह्मभूत इति एवमेव पंचा वयवर्जोकारोपि ब्रह्मभूतो ब्रह्मणः सकाशाहत्ति

रोधेन प्रत्यक्ष विषयीभूतः सन्स्वाश्रयं स्वोत्पत्ति लय स्थान मलमत्त्यंत परिपूर्णमिति यावद्ब्रह्म सर्वाधिष्टानं दर्शयति प्रत्यक्षी करोति। ननु विकल्प मायारहिते चिदात्मकेऽहंकार एषः प्रथमः प्रकलिपतः अध्यास एवात्मनि सर्वकारके निरामये ब्रह्मणि केवले पर इति श्री रामोक्त्याऽहं कारस्यैव पूर्वोत्पत्तेः कथमों कारस्य ब्रह्मभूतत्त्वं पुनरप्यात्मबुद्ध्या समेत्यर्थान्मनो युक्ते विवक्षया मनः कायाग्नि माहंति स प्रेरयतिमारुतं मारुत स्तूरसि चरन्मंद्रं जनयतिस्वरमित्यादिना बुद्धि मनोग्नि मरुतामपि मंद्र स्वरादि जनकत्त्वाच्चकथं केवल मोंकारस्यैव साक्षाद्ब्रह्मभूतत्व मुच्यते तत्राह अहं वृत्ति विशिष्टा बुद्धि रेवाहंकार स्तस्या निरोधे नैवाव्यक्तोंकार स्फुरणं पुन स्तस्यामन आदि संबंधेन प्रसरणात्स्वरादीना मुत्पत्ति रतोबुद्ध्यादि स्वरां तानां सर्वेषामपिवाच्यांतर्गत्त्वा त्प्रणवस्य च सर्ववाचत्त्वात्सर्व मूलभूत त्त्वाच्च साक्षा दब्रह्मभूतत्त्वं प्रणवस्यैवेति भावः तस्मादों कारस्य योंत्यावयवो नाद स्तस्य पर्यवसानं यस्मिन्त द्ब्रहेमेवतस्योत्पत्तेर पिस्थानं बुद्ध्यादयो मारुतां तास्तु मद्भूय पातिनों तर्गड्डवन्नि मित्त मात्रं यथा घंटां तर्गड्ड नाघंटा नादो भवति तथा पि गडो केवलं नादाभि व्यंजकत्त्वा न्निमित्त मात्रता नादस्यतु घंटो पादानत्वेनोत्पतिलय स्थानत्वाद्घटस्य मृदिव घंटैव मुख्य कारणं तथा प्रणवस्य ब्रह्मोपादा न त्वात्तदुपासकास्तदा श्रयं ब्रह्म पाप्नुवंतीत्यर्थः।।२५।।

**विश्वस्मिन्ज्ञातचिद्रूपे मनो यदि प्रधावति।**

**काक्षतिस्तत्र वोस्माकं शनैः श्राम्य प्रशाम्यति।।२६।।**

नन्वात्मसंस्थं मनः कृत्वान किंचिदपिचिंत येत् यतो यतो निश्चरतिमन श्चंचलमस्थिरं ततस्ततो नियम्यै तदात्मन्यैव वशंनयेत् समाहितंयस्य मनः प्रशांतंदा नादिभिः किं वदतस्य कृत्त्यं अंयतं यस्य मनो विनश्यछानादि भिश्चेदपरं किमेभिः मनोवशेऽन्ये द्वय भवन्स्मदेवा मनश्चनान्यस्य वशंसमेति भीष्मोहि देवः सहसः सहीयान्युंज्या द्वशेतं सहि देव देवः सर्वेमनो निग्रहलक्षणांताः परोहियो गोमनसः समाधिरिति भगवद्वाक्या दात्म प्राप्तौ मनो निग्रह स्यैव प्राधान्यान्मनसस्तु दुर्निग्रहत्त्वा च्चकेनोपायेनकथ नैश्चल्यं स्यादिति शिष्य संदेहं स्वय मेवाशंकय तदुपायमाह विश्व स्मिन्निति विश्व स्मिन्सर्वस्मिन् सचराचरे जगति ज्ञातचिद्रूपेज्ञातं चिद्रूपं चैतन्यरूप मेव यस्मिन्तस्मिन्सति मनः संकल्प विकल्पात्मकं यदि प्रधावति दोष गुण बुध्या पदार्थ मात्रेषु हेयो पादेयत्वेन संबंधं प्राप्नोति तत्र वायुष्माक मस्माकं च काक्षतिः काहानिरित्यर्थः यत आत्मज्ञा नाज्जगद्भाति चात्म ज्ञानान्न भासतेरज्व ज्ञानादर्हि भित्ति तज्ज्ञा नाद्भासतेनहि।।

देहाभिमाने गलिते विज्ञाते परमात्मनि यत्रयत्र मनोयाति तत्र तत्र समाधय

इत्यष्टावक्र शंकरादि निर्णयात्तन्मनः पूर्वसंस्कारेण चांचल्य स्वभावाच्चतुर्दशलोक भ्रमणे न बहु श्रमं प्राप्य सर्वत्रात्म व्यतिरिक्तस्या भाव दर्शनात्स्वय मेवशनैः प्रशाम्यति नैश्चल्पता माप्नोति। तस्य सर्वत्र भगवत्स्व रूपा नुसंधाने नात्मा कारतास्वत एव सिध्यती त्यर्थः।।२६।।

**सत्त्वतुष्टीः परित्यज्य कैवल्य विरहातुराः।।**

**स्वात्मानं हरि मीक्षंतो भजध्वंगत मत्सराः।।२७।।**

पुनः स्व प्रलयं विनापि केवलं सर्वत्र चिद्रूप ज्ञाने नात्माकारता मनसः स्वत एव सिध्यतीति श्रुत्त्वाहर्षितान्ध्यानादिषुशिथिल प्रयलान शिष्यान्मत्त्वा श्री सद्गुरुस्तानेव कैवलय् पूर्णानंदामृतांभोधौ निमग्नान्कर्त्तुं किंचिदं तरंग साधनमाह सत्त्व तुष्टीरिति हे शिष्याः सत्त्वतुष्टीः सत्वोत्कर्ष जन्य सुखानि तान्येवाह शमदमतितिक्षो परति स्मृति तुष्टि त्यागास्पृहात्म विचार जन्यानिएता एवनव विधाऽसत्त्व वृत्ति जन्यास्तुष्टयः पूर्णस्वात्मानं दांतराय भूताः कैवल्य प्राप्तौ प्रतिपक्षिणी र्ज्ञात्त्वा परित्यज्यतासां वृत्ति जन्यत्वादविश्वस्य कैवल्य विरहा तुराऽसंतः कैवलयं निर्विकल्पकं यत्सुखं जन्य सुख दुःखासंभिन्नं सुखंदुःख सुखात्यय इति भगवदुक्तं तस्ययो विरहः प्राप्त्यभावस्तेनातुरा स्तत्कदाप्राप्नुमइत्त्युत्सुकाः संतो हरिंभजध्वं सेवध्वं किं कुर्वंतः स्वात्मानं स्वरुपभूतमेवह रिमीक्षंतोमनसालक्षी कुर्वंत स्तत्र हरेः स्वात्मत्वे प्रमाण माह कोति प्रयासोऽ सुरबालक हरे रूपासने स्वेहृदि छिद्रवत्सलः स्वस्यात्मनः सख्युर शेषदेहिनां सामान्यतः किं विपयोपपादनैः त्वामात्मानं परं मत्वा परमात्मा नमे वच आत्मा पुनर्बर्हिमृग्य अहोज्ञ जनताऽज्ञता दुराराध्यं समाराध्य विष्णु सर्वेश्वरं यो वृणीते मनोग्राह्यं मसत्त्वान्कुमनी ष्या सौ किमेतरौत्मनस्तुच्छैः सहदेहेननश्वरैः अनर्थैरर्थ संकाशैर्नित्या नंद महोदधेरित्यादि प्रह्लाद शुक नारदादिवाक्यै हरिः स्वात्मत्त्वनिरूपणा त्तदित्तरस्य देहा देस्तुच्छ त्वं निरुप्यपुनः सकल गीता भागवत सिद्धांत कृष्णार्षभहरिसनकादि वाक्यै र्दृढयति मत्कर्म कृन्यत्जरमो मद्भक्तः संगवर्पितः निर्वैरः सर्वभूतेषु यः समामेतिपांडव सर्व भूतेषुयः पश्येद्भगवद्भा वमात्मनः भूतानि भगवत्यात्मन्येष भागवतोत्तमः शास्त्रेष्विवयानेवस्तुनिश्चितो तृणांक्ष मस्य सध्र्यकपि मृशेषु हेतुः असंग आत्मव्यतिरिक्तं आत्म निदुढारति ब्रह्मणि निर्गुणे च ये स्थादि भार्गवत सिद्धांत वाक्यार्था वलोचनेन सर्व भूतेषु भगवद्भाव नया निर्वैरस्य हरिरूप गुरुं भजतः पुरुषस्या त्मातिरिक्तासंग पूर्विका निर्गुणे ब्रह्मणि रतिस्त द्वारा च स्वरुप प्रवेशः संपद्यत इति श्लोकत्रयस्यतात्यर्यार्थः तस्माद्यूयं गतमत्सराः परोत्कर्षा सहनं मत्सरस्त द्ररिताः संतो हरि गुरुं भजध्वं न केवलं बाह्य कर्म परित्यागे नवयं ज्ञानिनः कृत कृत्त्या इति मंतव्यमिति भावः।।२७।।

इतिशिष्यात्समादिश्य त्ध्यान निष्ठो भवद्गुरुः
तेचानंदामृतांमोधौ व भू वुर्लीन वृत्तयः ।।२८।।

एवं श्री गुरुरनेक व्रत श्रवणव्यग्रचेतसांशिष्याणां सकल संशयं सिद्धांत निरुपणेन निराकृत्य पठतो बभूवेत्यभि प्रायेणकविराह इतिशिष्यानिति इत्युक्त प्रकारेणोत्तमाधिकारिणो मुमुक्षू न्शिष्यान्प्रति श्रीराम कृष्ण व्यास शुक नारद सनकादि निर्णीतं शास्त्र सिद्धांतं सद्योमुक्तये सनातनमादिश्य सम्यगुप देशं कृत्वा पश्चाद्वा ह्यचित्तवृत्तिं प्रत्यक् निगृह्य स्वयं ध्यान निष्ठः ध्यानं चित्तस्याध्येयाकारता तस्मिन्निष्ठा पर्यवसानंलय इति यावत् यस्या तादृशोभव द्बभूव तेच शिष्या अपि श्री सद्गुरुवाचः श्रवणोत्तर काले एव निर्मलांतः करणाः संतोभजनामात्मान मे वहरिं ज्ञात्वा बाह्य विषये भ्यस्तुत्छत्त्वेन चित्त वृत्तिं निगृह्य कैवल्य परमानंदामृतांभोधौस्वात्मनि ब्रह्म णिलीन वृत्तय अहं वृत्त्यु पाधिलयेन स्वयं लीना बभूवुरित्यर्थः।।२८।। अथ जगन्नाथोस्मिन्ग्रंथे स्वकर्त्तृत्वाभि निवेशं परित्यज्य स्वाज्ञान स्वातंत्र्य निवेदनपूर्वकं श्री सद्गुरुकर्तृत्वं प्रकाश यति श्लोक त्रयेण निमित्तमात्र मित्यादिना तानेव श्लोका नाह निमित्तमात्रं गुरुशिष्यवाद श्लोकाः परंभागवतस्यसारं निरुपितं भक्त जनात्म सिद्ध्यै ते नैव कृष्णेन मदा ननेन।।२९।। रामायणे भागवतेवे दांते भारते चयत् सारंसंगृह्य संबुद्धय यथामति निवेदितं ।।३०।। शुद्धयंवायदिवाऽ शुद्धंना हं जाना मितत्त्वतः जानाति सद्गुरुः साक्षा द्यो वैग्रंथ प्रवर्त्तकः ।।३१।। अस्मिन्ग्रंथे शिष्य संदेह निरासार्थं श्री गुरुक्ति मति क्रम्य श्रीव्यासादि वाक्यानि प्रामाण्येन दर्शितानि तानि श्री गुरु वाक्यानिन भवंतीति ज्ञानि भिर्नवक्तव्यंयतः श्री गुरुरोरेवसर्वांतर्या मित्त्वादात्म संशय निरसन वाक्यानि व्यासादि रूपैरुक्तान्यपि श्री सद्गुरोरेवम्व चनानीति भावः।।

## इति श्री दिनकर दुर्गासुत जगन्नाथ विरचित
## सिद्धांत रहस्य ग्रंथस्योत्तरार्ध्दः समाप्तः।।
## ।।श्री कृष्णार्पणमस्तु।।

यदक्षरपदं भ्रष्टं मात्राहिनं च यः पठेत् तत्सर्वंक्षम्यतां देव प्रसिद परमेश्वर।।१।।

सुदामोपनाम्ना सदाशिव भट्ट सूनु भगवंतेनधनद्वारा संपादिता। स्वार्थं परार्थंच। शुभं भवतु।।

## ।। सिद्धान्त रहस्यस्योत्तरार्ध कारिकापाठः ।।

श्रीतीर्थामृत वाक् समेत वयुनाश्छात्राः परेभक्तिजां।
सख्युर्वीक्ष्य परात्म प्रातिमतुलां प्रष्टुं पुनःसादराः।।१।।

सद गुरुरुवाच–

शास्त्रा ज्ञानकुतर्क नष्ट मतयः प्रायः परान्वंचका।।
अर्थानर्थ करानरा नटविधं वे शंविधायाश्रितान्।।२।।

सत्संगादविधिं विधिं समनुते भेदं भयं चाश्रितः।।
संसिद्धौ यतते कथं पुनरसौ जीवः पराग् वृत्तिमान्।।३।।

श्रृणुध्वं पुत्रक यूयं नाना मत विमोहिताः।।
श्रेयो वदन्त्यनैकांतं यथामति यथारुचि।।४।।

सर्वेप्येते तनुं भक्ता अव्यक्ते व्यक्त बुद्धयः।।
अजानन्तोन्तरात्मानमंतवत्फल भागिनः।।५।।

वैकुण्ठादिश्रुतं सत्यं मन्यन्ते प्राकृतं परे।।
हरेरिच्छैव प्रकृति स्तां विना तत्कथं भवेत्।।६।।

दृश्ये सत्त्व मतिं कृत्वा सिद्धानिन्दन्त्यचेतसः।।
कृष्णमेवविनिन्दन्ति मायावादिविनिन्दकाः।।७।।

एवं शक्तेः शक्तिमतोर्भेदं गर्जन्त्यवुध्दयः।।
प्रमाया ज्योतिषश्चैव केवलं व्यवहारतः।।८।।

यदि प्रतीतिर्जायेत स्वातन्त्रेण पदार्थयोः।।
वाच्यस्तदा तयोर्भेदो नान्यथारज्जुसर्पयोः।।९।।
विशिष्टं सगुणंप्रोक्तं निर्गुणं निर्विशेषणं।।
एक रूपं द्वयं ज्ञात्वा हेमार्थीवाकृति चरेत्।।१०।।

घनीभूतं द्रवीभूतं घृतमेक यथाभवेत्।।
विशिष्टं शुद्धमद्वैतं ज्ञानमेकं न मिद्यते।।११।।

असंगः केवलः शुद्ध आत्मा यदिनिरुपितः।।
श्रुत्या तर्हि कथं वक्तुं वैशिष्ट्यं तत्र शक्यते।।१२।।

चैतन्यं वृत्त्यवछिन्नमपीदमसमंजसं।।
व्यापकस्य विभोर्वृत्तेखछेदकताकथम्।।१३।।

खद्योत ताराचन्द्राणां प्रकाशः प्राक् खगोदयात्।।
तथा बुद्धे स्तु त्रैविध्य मग्रेबोधाद्वि भासते।।१४।।

वृत्तेरेव व्यवच्छेदो वृत्यैव क्रियते स्वयं।।
सोपि साभासया शक्यो वक्तुं केवलतयानतु।।१५।।

ज्ञानादनन्तरं भोक्तुं प्रारब्धं शिष्यते यदि।।
ज्ञानाग्निः सर्व कर्माणि दहत्येतदनर्थकम्।।१६।।

एकमेवाद्वितीयं चेत् ब्रह्मजीवेश्वरौ कथं।।
अश्नन्कर्म फलं जीवोऽननन्नीशः प्रकाशते।।१७।।

जीवेकर्तृत्व भोक्तृत्वे प्रसज्जेते ह्यहंमतैः।।
तदद्धयासादनहृदयासातूर्य रूपोवतिष्ठते।।१८।।

वृत्तेर्लयः कथं स्याच्वेद्वासनाहाभिमन्तरा।।
संगंत्यक्त्वा ब्रह्म भूतो द्वयं तस्य विलीयते।।१६।।
जलोद्ववे जलस्यान्तः स्यात्सिन्धुः स यथैवहि।।
वृत्युद्गमे तथा वृत्तेर्लयाद ब्रह्म सनातनं।।२०।।

बुद्धिनौकाश्रितो लोके करोति च गमागमं।।
तांत्यजन्त्याज्जले लीनोऽ नीहोव्रह्मणि लीयते।।२१।।

न सूत्रव्यतिरेकेण पटसंस्था प्रदृश्यते।।
तथाब्रह्मातिरेकेण नहिविश्वं प्रतिष्ठितम्।।२२।।

बीजाङ्कुर स्कन्ध शाखा पत्र पुष्पैर्यथातरुः।।
तथैवाद्वैतवस्त्वेकं कार्यकारण शक्ति धृक्।।२३।।

विहायनाम रूपेऽयं हृदिहंसं विबुध्यच।।
यदा नाहं वदाभासो हं विना शब्दं विभासते।।२४।।

नादो दुंदुमि संभूतो दुंदुमिं लक्षयत्यसौ।।
ब्रह्मभूतस्तथोंकारः स्वाश्रयं दर्शयत्यलं।।२५।।

विश्वस्मिन् ज्ञातचिद्रूपे मनो यदि प्रधावति।।
का क्षतिस्तत्र वोऽस्माकं शनैः श्राम्य प्रशाम्यति।।२६।।

सत्त्वतुष्टीः परित्यज्य कैवल्य विरहातुराः।।
स्वात्मानं हीरमीक्षन्तो भजध्वंत गत मत्सराः।।२७।।

इतिशिष्यान्समादृश्य ध्यान निष्ठोमवद् गुरुः।।
ते चानन्द। मृतांमोधौवभूवुलीर्न वृत्तयः।।२८।।

परंभागवतस्य सारंनिरूपितं भक्त ननात्मसिद्धयै तेनैव कृष्णेन मदानेन।।२९।।

रामायणेभागवते वेदान्ते भारते च यत् सारंसंगृह्य सम्बुद्धययथामति निवेदितं।।३०।।

शुद्धं वा यदिवाऽशुद्धं नाऽहंजानमितत्त्वतः।।
जानाति सद्गुरुः साक्षाद्यो वै ग्रन्थ प्रवर्तकः।।३१।।

इतिदिनकर दुर्गासुत जगन्नाथ विरचित सिद्धान्त रहस्योत्तरार्ध कारिका पाठः पूर्णः।।